श्रीमन्मित्रमिश्रविरचिता

# आनन्दकन्दचम्पूः

जयपुरराजगुरुकथाभट्टवंशावतंसेन

श्रीनन्दकिशोरशर्मणा साहित्याचार्येण

सभूमिकोपस्कारं सम्पादिता ।

---

THE

# ĀNANDA-KANDA-CHAMPŪ

By

MITRA MIS'RA.

With a Foreword by

Principal GOPINATH KAVIRAJ.

Edited with Introduction, alphabetical Index etc,

By

Nanda Kishore Sharmā Sāhityāchārya,

Research Scholar, Government Sanskrit Library,

Benares.

---

1931.

# FOREWORD

The following pages embody the text of an interesting Champū, called Ānanda Kanda, attributed to Mitra Miśra, the accredited author of Vīramitrodaya, the famous digest on Indian Law. The work was undertaken for publication, even on insufficient data, ( there being only a single incorrect manuscript available so far ), on the following grounds :

(i) Its association with the name of Mitra Miśra, who is a very familiar figure in the history of Sanskrit Literature, though in a different branch.

(ii) Its ornate diction, which, inspite of its apparent blemishes, is certainly a striking feature in the declining age of sanskrit composition.

(iii) The interest of the work as a literary production from the standpoint of Vaiṣṇava sectarian culture.

A cursory glance will suffice to reveal a number of grammatical and syntactical anomalies which are unpardonable in a modern composition. The theme of the Champū too is not new, being based in a general way on the Joy of the birth and early exploits of S'rī Kṛṣṇa as depicted in the S'rīmad Bhāgavata, Section X ( Chapters 1-69 ). And yet the work, even as it is, was considered deserving of publication.

The name of the work owes its origin to the fact that it treats of the appearance in time ( birth ) of the Eternal Principle of Divine Joy as embodied in the Holy Figure of S'rī Kṛṣṇa ( Cf the text III. 4 ). It is not known to what particular Vaiṣṇava sect the

author belonged. All that is known is that he was a Sannāḍhya Brahman of the Pañcha Gauḍa class and was devoted to Viṣṇu worship.

The author's patron, Rājā Vīra Siṃha Deva of Orchha, reigned from 1605 A. D. to 1627 A. D. and was probably identical with the Bir Singh Deo who is said to have killed Abul Fazl, the courtier of the Emperor Akbar. It is not known whether Mitra Miśra was himself the author of the Champū or it was another poet's composition fathered on him, as partly perhaps is the case of the commentary on Yājñavalkya Smṛti.

The young scholar to whom the work was entrusted for editing was faced with great difficulties, but he has spared no pains to make the edition as useful and attractive as possible. The edition is based, as already observed, on a single manuscript of the work belonging to the Sarasvati Bhavana Library, Benares. The Ms. is full of inaccuracies and slips of the pen disfigure it from beginning to end. There were occasional lacunae in the text. The printing has been carried through much more quickly than was consistent with an artistic work of this nature. It is still to be hoped that with all these defects, of which the editor is painfully conscious, the book will be found an interesting and pleasant reading and it is expected that sufficient allowance will be made for the shortcomings incidental to a work of this character.

Govt. Sanskrit College,
Benares. } GOPINATH KAVIRAJ

॥ श्रीदधिमथ्यै नमः ॥

# उपोद्घातः ।

अथेयं प्रस्तूयते बुन्देलखण्डाधिराजवीरसिंहदेवसमाश्रितश्रीमन्मित्रमिश्रविरचिताभिनवाऽऽनन्दकन्दचम्पूर्विपश्चिदपश्चिमानां करकमलेषूपायनीकर्तुम् । संस्कृतसाहित्ये गत्यर्थकाच्चौरादिकाच्चपिधातोरुप्रत्यये विहिते "चम्पयति, चम्पति" इति निष्पन्न(१)श्चम्पूशब्दः काव्ये कदा निरूढ इति विवेके प्रस्तुतेऽग्नि(२)पुराण इममुपलभामहे ।

यथा—

(३)"मिश्रं चम्पुरिति ख्यातं प्रकीर्णमिति च द्विधा ।
श्रव्यं चैवाभिनेयं च प्रकीर्णं सकलोक्तिभिः" ॥

[ ३३६ अध्या० ३८ श्लो० ]

काव्यं तावत् त्रिधा, गद्यपद्यमिश्रभेदेभ्यः । तत्र मिश्रं गद्यपद्यमयं काव्यं चम्पूशब्देनोच्यत इत्याशयः ।

ततश्च खिस्ताब्दसप्तमशताब्द्यां दण्डिना काव्यादर्शे [१ अ० ३१ श्लो०] "गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते" इत्यादिना चम्पूशब्दः समादृतः । तथा सूक्ष्मेक्षिकयेदमपि विवेचितं तत्रैव यद् यदि राजस्तुतिर्गद्यपद्यमया भवेत्तदा तत्र बिरुदशब्दो व्यवहार्यः, इति ।

किं च दण्डिनैवं विशेषे प्रतिपादितेऽपि नाटकादावतिव्याप्तिमाशङ्क्य द्वादशशताब्द्यां हेमचन्द्राचार्यैः काव्यानुशासने चम्पूलक्षणं

---

(१) चमत्कृत्य पुनाति सहृदयान् विस्मितीकृत्य प्रसादयतीति चम्पूरिति हरिदासभट्टाचार्यः ।

(२) बंगाल एसियाटिकसोसाइटी १९३३ वि. वर्षे राजेन्द्रलालमिश्रेण प्रकाशितम् ।

(३) यद्यपि "मिश्रं वपुरिति ख्यातं" इति पाठः समुपलभ्यते तथापि सोऽपपाठः । अर्थानुसन्धानशून्यत्वात् ।

परिष्कृतवान् ।

उक्तवांश्च—

"गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः" इति ।

यथा नलचम्प्वां कथाविभाजका उच्छ्वासा हरिचरणसरोजपदाङ्किताः समुपलभ्यन्ते । तथाविधोच्छ्वासादियुता गद्यपद्यमयी वाणी चम्पूरिष्यत इति चम्पूलक्षणव्यवस्था ।

चम्पूनिर्माणशैलीयं वैदिकोपाख्यानेभ्यः पालीभाषामयजातककथाभ्यः पञ्चतन्त्रहितोपदेशप्रभृतिसंस्कृतकाव्येभ्यश्च समुद्धृत्य रूपान्तरमानीता विदुषां पुरस्तात्प्रस्फुरति ।

तत्र सर्वप्रथमा कतमा चम्पूरिति पर्यालोचने तु दमयन्तीकथापराभिधेया नलचम्पूरस्माकं दृष्टिपथमवतरति । यद्यपि काव्यानुशासने हेमचन्द्रेण चम्पूलक्षणं निर्माय सुबन्धुविरचितवासवदत्तोदाहरणत्वेन निरदिश्यत । तथापि सर्व आलङ्कारिकास्तां चम्पूतया न मन्वत इति सर्वप्रथमा त्रिविक्रम(१)भट्टविरचिता नलचम्पूरेव मन्तव्या । सोऽयं त्रिविक्रमभट्टो मदालसाचम्पूप्रणेता कुरुण्ड(२)कग्रामस्थदानपत्रलेखको मान्यखेटाधीशराष्ट्रकूटकुलसमुद्भूतश्रीमदिन्द्रराज ( तृतीय ) महाराजसमाश्रये ९१५ ईशवीयवर्षे समुपस्थित आसीत् ।

किं च—साम्प्रतं बहुसंख्याकाश्चम्प्वः समधिगता इति तासां सर्वासामैतिहासिकपर्यालोचनस्यात्रानवकाशमवलोक्य केवलं पर्यालोचितसमयाः, अपर्यालोचितसमयाश्चेति ता द्विधा विभज्य विदुषां मोदायाधो निर्दिश्यन्ते ।

---

(१) त्रिविक्रमभट्टचरितं विवृतमस्माभिश्चम्पूदन्तनिबन्धे ।

(२) लेखोऽयं जर्नल बाम्बे ब्राञ्च रायल एशियाटिकसोसाइटी भागे १८ पृष्ठेषु २९३—२६१ ।

## अथ पर्यालोचितसमयाः ।

| चम्पूनाम | निर्मातृनाम | समयः | विवरणम् |
|---|---|---|---|
| १-नलचम्पूः, | त्रिविक्रमभट्टः, | ९१५ ए. डी., | मुद्रिता [ बम्बई ] |
| २-मदालसाचम्पूः, | ,, | ,, | ,, ,, |
| ३-यशस्तिलकचम्पूः, | सोमदेवसूरिः, | ९५९ ए. डी., | ,, ,, |
| ४-जीवन्धरचम्पूः, | हरिचन्द्रः, | १० शताब्दी, | ,, [ तंजौर ] |
| ५-रामायणचम्पूः, | भोजः, | ११ शताब्दी, | ,, [ बम्बई ] |
| ६-उदयसुन्दरीकथाचम्पूः, | सोड्ढलः, | ,, | ,, [ बरौदा ] |
| ७-चम्पूभारतम्, | अनन्तभट्टः, | १५ शताब्दी, | ,, [ बम्बई ] |
| ८-वरदाम्बिकापरिणयचम्पूः, | तिरुमलाम्बा, | १५३० ए. डी., | (१) [तं०नं०४२२०वा०७ अमुद्रिता] |
| ९-वीरभद्रदेवचम्पूः, | पद्मनाभमिश्रः, | १५७६ ए. डी., | (२) [ पिटर्सन १, १०१ ] |
| १०-भागवतचम्पूः, | अभिनवकालिदासः, | १६ शताब्दी, | मुद्रिता [ बम्बई ] |

( १ ) डिस्क्रिप्टिव् कैटोलाग् आफ् दी संस्कृतमनस्क्रिप्ट्स् इन् दी सरस्वतीमहल लाइब्रेरी तंजौर वाल्यूम ७, नम्बर ।

( २ ) डिटेल्ड रिपोर्ट आफ आपरेसन् इन् सर्च आफ् संस्कृतमनस्क्रिप्ट्स्, बाई प्रोफेसर पिटर्सन् वाल्यूम १ पृ० १०१ ।

| | | | |
|---|---|---|---|
| ११-माधवचम्पूः, | चिरञ्जीवभट्टाचार्यः, | १६ शताब्दी, | ,, [ कलकत्ता १८७२ ई० ] |
| १२-विद्वन्मोदतरङ्गिणीचम्पूः, | ,, | ,, | ,, [ ,, ] |
| १३-भागवतचम्पूः, | राजनाथः | ,, | [ तं० ७ नं० ४०७० अमुद्रिता ] |
| १४-आनन्दवृन्दावनचम्पूः, | कर्णपूरः | ,, | मुद्रिता [ मथुरा ] |
| १५-गोपालचम्पूः, | जीवगोस्वामी | ,, | ,, [ वृन्दावन १९६१ सं० ] |
| १६-यात्राप्रबन्धचम्पूः, | समरपुङ्गवदीक्षितः, | ,, | ,, [ बम्बई ] |
| १७-आनन्दकन्दचम्पूः | ,, | ,, | [ इन्डि ७ वा. अमुद्रिता ] |
| १८-मन्दारमरन्दचम्पूः | कृष्णः | ,, | मुद्रिता [ बम्बई ] |
| १९-वसुचरित्रचम्पूः, | कालहस्ती, | ,, | [ तं० ७ नं ४१४६ अमुद्रिता ] |
| २०-नृसिंहचम्पूः, | सूर्यदैवज्ञः, | १६३६ ए. डी. | (१) [इन्डि. ७ नं. ४०५१ अमुद्रिता] |
| २१-नीलकण्ठविजयचम्पूः, | नीलकण्ठदीक्षितः, | १६३७ ए० डी० | मुद्रिता [ मद्रास ] |
| २२-त्रिपुरविजयचम्पूः | ,, | ,, | (२) [ तंजौर पृष्ठ १५८ ] |

(१) इन्डिया आफिस् कैटोलाग् वाल्यूम ७, नम्बर ।

(२) बरनलस् तंजौरकैटोलाग १८८० ई० ।

| | | | |
|---|---|---|---|
| २३–कर्णचम्पूः, | कक्काभट्टः, | १६९६ ए. डी. | (१) [ ब० नं. १२४२ ] |
| २४–विश्वगुणादर्शचम्पूः, | वेङ्कटाध्वरी, | १७ शताब्दी, | मुद्रिता [ बम्बई ] |
| २५–हस्तिगिरिचम्पूः, | ” | ” | |
| २६–उत्तरचरितचम्पूः, | ” | ” | मुद्रिता [ बम्बई ] |
| २७–यतिराजविजयचम्पूः, | आहोबिलः | १७ शताब्दी, | (२) [ कु. ४ नं. ३५५१ अमुद्रिता ] |
| २८–केरलाभरणचम्पूः, | रामचन्द्रदीक्षितः, | ” | [ तं. ७ नं. ४०३१ ] |
| २९–स्वाहासुधाकरचम्पूः, | नारायणः, | १७ शताब्दी, | मुद्रिता [ बम्बई ] |
| ३०–त्रिपुरविजयचम्पूः, | नृसिंहामात्यः, | १७ शताब्दी, | [ तं. ७ नं. ४०३६ ] |
| ३१–त्रिपुरविजयचम्पूः, | अतिरात्रयाजी, | ” | [ तं. ७ नं. ४०३६ ] |
| ३२–नृसिंहचम्पूः, | केशवभट्टः | ” | मुद्रिता [ बम्बई ] |
| ३३–अनिरुद्धचरितचम्पूः, | देवराजः | १७ शताब्दी, | [ सरस्वतीभवन बनारस ] |
| ३४–धर्मविजयचम्पूः, | नल्लादीक्षितः, | १७१० ए. डी. | [ तं. ७ नं. ४२३१ ] |
| ३५–भोसलवंशावलीचम्पूः, | वेङ्कटेशकविः, | १७११ ए. डी. | [ तं. ७ नं. ४२४० ] |

(१) ए. डिस्क्रिप्टिव् कैटोलाग् संस्कृत अन्ड प्राकृत मनस्क्रिप्ट्स इन दी लाइब्रेरी आफ् दी बम्बई ब्राञ्च आफ दी रायल् एसियाटिक सोसाइटी वा. १—३ ।

(२) ए ट्राइनीयल् कैटोलाग् आफ मनस्क्रिप्ट्स्, गवर्नमैण्ट संस्कृतलाइब्रेरी मद्रास, कुप्पुस्वामी शास्त्री एम. ए. । ४ वाल्यूम्, नम्बर ।

| | | | |
|---|---|---|---|
| ३६–वसुगिरिभूषणचम्पूः, | अप्पलाचार्यः, | १८ शताब्दी, | [ कु. ४ नं. ३००५ ] |
| ३७–हरिश्चन्द्रचरित्रचम्पूः, | गुरुरामः, | १८ शताब्दी, | [ कु. ३ नं. २०८३ ] |
| ३८–शङ्करचोतोविलासचम्पूः, | शङ्करमिश्रः, | ,, | (१) [ ह. वा. ५ नं. १४७ ] |
| ३९–गौरीमायूरमाहात्म्यचम्पूः, | अप्पादीक्षितः, | १७२५ ए. डी. | [ तं. ७ नं. ४०३५ ] |
| ४०–चित्रचम्पूः, | बाणेश्वरभट्टाचार्यः, | १७४४ ए. डी, | [ इन्डि. ७ नं. ४०४४ ] |
| ४१–गङ्गावतरणचम्पूः, | शङ्करदीक्षितः | १७८० ए. डी. | [ ,, नं. ४०४१ ] |
| ४२–बालभागवतचम्पूः, | पद्मराजः, | १८०० ई. | [ (२)भण्डा. १ नं. ७१ ] |
| ४३–स्यानन्दूरपूरवर्णनचम्पूः, | [रामवर्म कुलशेखर वञ्चिमहाराजः] | १८१३ई. | [ मुद्रिता—अनन्तशयने] |
| ४४–भागीरथीचम्पूः, | अच्युतशर्मा, | १८१४ ई., | मुद्रिता ( बम्बई ) |
| ४५–कुमारसंभवचम्पूः, | शरभोजी महाराजः, | १८३२ ई. | [ तं. ७ नं. ४०३० ] |
| ४६–रघुनाथविजयचम्पूः, | श्रीकृष्णकविः, | १८६५ ई० | मुद्रिता ( बम्बई ) |
| ४७–शिवविलासचम्पूः, | विरूपाक्षः, | १८ शताब्दी, | [ तं. ७ नं. ४१६० ] |
| ४८–चोलचम्पूः, | ,, | ,, | [ ,, नं. ४२१३ ] |
| ४९–वेङ्कटेशचम्पूः | धर्मराजः | ,, | [ तं. ७ नं. ४१५८ ] |

( १ ) डिस्क्रिप्टिव् कैटोलाग् आफ् संस्कृत मनस्क्रिप्ट्स् इन् कलकत्ता संस्कृतकालेज, हृषीकेशशास्त्री वाल्यूम ५, नम्बर ।

( २ ) लिस्ट् आफ संस्कृतमनस्क्रिप्ट्स् प्राइवेट लाइब्रेरी इन् दी बम्बई प्रेसीडेन्सी, आफ्.आर.जी. भण्डारकर, पार्ट १ नम्बर । सन् १८९३ ।

| | | | |
|---|---|---|---|
| ५०–उत्तरचम्पूः, | भगवन्ताचार्यः, | १८ शताब्दी | [ तं. ७ नं. ४०२६ ] |
| ५१–व्रजमुकुटीविलासः | अलशिङ्गभट्टदीक्षितः, | ” | [ कु ४ नं. ३२९२ ] |
| ५२–भैष्मीपरिणयचम्पूः, | रत्नखेटदीक्षितः, | १८ शताब्दी | [ मुद्रिता [ कलकत्ता ] |
| ५३–अभिनवरामायणचम्पूः, | लक्ष्मणदान्तः, | १८७६ ई. | [ भण्डा. १ नं. ३६ ) [ मुद्रिता ] |
| ५४–लक्ष्मीश्वरचम्पूः | रमाबाई, | १८७९ ई. | [ ” कलकत्ता ) |
| ५५—शङ्कराचार्यचम्पूकाव्यम् , | बालगोदावरी, | वर्त्तमानः | मुद्रितम् [ बम्बई ] |
| ५६–वेङ्कुलानखिन्दरम् , | भगवच्चन्द्रविशारदः, | ” | ” ( कलकत्ता ) |
| ५७–प्रदोषमहात्म्यम् , | प्रभाकरतालमणः | ” | ” [ त्रिचूरम् ) |
| ५८–पुरुदेवचम्पूः ( जैनचम्पूः ) | जिनदासशास्त्री | | बम्बई मुद्रिता |

## अपर्यालोचितसमयाश्चेमाः ।

| | | |
|---|---|---|
| १–अभिनवपारिजातचम्पूः, | अज्ञातनामा | (१) [ Oppert २ नं० ३४७८ ] |
| २–अभिनवभारतचम्पूः, | अभिनवकालिदासः, | (२) [ Rice २४६ ] |
| ३–उत्तरचम्पूः, | वेङ्कटकृष्णकविः, | [ कुप्पु. ४ वा. ४०२९ (c) ] |
| ४–उत्तरचम्पूः | अज्ञातनामा | [ Oppert २, ९००८ ] |
| ५– ,, | यतिराजः | (३) [ N. W. ३०२ ] |
| ६– ,, | शङ्कराचार्यः | [ ,, २२२ ] |
| ७– ,, | हरिहरानन्दः | [ ,, २७० ] |
| ८–उत्तरकाण्डचम्पूः, | ब्रह्मसूरिः | [ कुप्पु. ३ वा. २३२२ (a) ] |
| ९–उत्तरचम्पूरामायणम्, | राघवाचार्यः, | [ Rice २४८ ] |
| १०–उत्तररामायणचम्पूः, | रामानुजदासः | [ कुप्पु. ४ वा. ३४३७ ] |
| ११–काकुत्स्थविजयचम्पूः, | वल्लीसहायः, | [ इन्डिया ४०३९ ] |

(१) लिस्ट् आफ संस्कृतमनस्क्रिप्ट्स् इन प्राइवेट् लाइब्रेरीज् आफ् सदर्न इन्डिया बाई आपर्ट वाल्यूम २, नम्बर ।

(२) कैटोलाग् आफ संस्कृतमनस्क्रिप्ट्स् इन माइसोर अन्ड कुर्ग बाई राइस् ।

(३) ए कैटोलाग् आफ् संस्कृतमनस्क्रिप्ट्स् इन प्राईवेट् लाइब्रेरीज् आफ नार्थ वेस्ट प्राविन्सेज् ।

| | | |
|---|---|---|
| १२–काव्यकलापचम्पूः, | महानन्दधीरः | (१) [ मित्र. २ वा. ९३१ ] |
| १३–काशिकातिलकं, | नीलकण्ठभट्टः | [ कुप्पु. ३ वा. २०११ (a) ] |
| १४–कुमारभार्गवीयचम्पूः, | भानुदत्तः | [ इन्डिया ४०४० ] |
| १५–कुमारविजयचम्पूः, | भास्करयज्वा | [ कुप्पु. ४ वा. ३९१९ (f) ] |
| १६–कुमाराभ्युदयचम्पूः, | अज्ञातनामा, | [ „ ३ वा. २५०१ (B) ] |
| १७–कुमारोदयचम्पूः, | „ | [ „ ४ वा. ३९६४ (B) ] |
| १८–कुवलयाश्वविलासः, | त्रिविक्रमः, | [ बम्बईमुद्रितः ] |
| १९–कृष्णकीर्तिः, | चिन्तामणिः | [ बीकानेर ५४२ ] |
| २०–कृष्णराजचम्पूः, | कृष्णशास्त्री, | [ Rice २४८ ] |
| २१–कृष्णविजयचम्पूः, | वीरेश्वरः, | [ कुप्पु. २ वा. १६०४ (c) ] |
| २२–गङ्गावंशानुचरितचम्पूः, | वासुदेवरथसोमयाजीराजगुरुः | [ कुप्पु. ४ वा. ३०३० ] |
| २३–गोदापरिणयचम्पूः, | अज्ञातनामा | [ कुप्पु. ४ वा. ३१०७ ] |
| २४–गौरीपरिणयचम्पूः, | वेङ्कटसूरिः, | [ „ ३–२२५५ (a) ] |
| २५–गौरीमायूरमाहात्म्यचम्पूः, | अप्पादीक्षितः, | [ तंजौर १५८ पृ० ] |
| २६–चन्द्रशेखरचम्पूः, | रामनाथकविः | [ कलकत्तामुद्रिता ] |

( १ ) नोटिसेज् आफ् संस्कृतमनस्क्रिपट्स् बाई राजेन्द्रलालमित्र वाल्यूम, नम्बर ।

| | | |
|---|---|---|
| २७–चम्पूसंक्षेपः, | भीष्माचार्यः | [ कुप्पु. ३ वा. २७८६ (c) ] |
| २८–दूतवाक्यचम्पूः, | अज्ञातनामा | [ ,, ३ वा. २४७५ (B) ] |
| २९–नरसिंहचम्पूः, | संकर्षणसूरिः | [ तंजौर १५९ पृष्ठ ] |
| ३०–निरनुनाकसिचम्पूः, | नारायणद्विजः, | [ कुप्पु. ४ वा. ४२०६ पृष्ठे (B) ] |
| ३१ नीलकण्ठचम्पूः | | ( बम्बई मुद्रिता ) |
| ३२–पञ्चकल्याणचम्पूः, | चिदम्बरकविः | [ कुप्पु. ४ वा. २९४० ] |
| ३३–पारिजातहरणचम्पूः, | कृष्णकविः, | ( बम्बई मुद्रिता ) |
| ३४–पार्वतीपरिणयचम्पूः, | रामेश्वरविद्वान् | [ कुप्पु. ३ वा. २८८८ (c) ] |
| ३५–पुरुषोत्तमचम्पूः, | नरसिंहः, | [ भण्डा. १ नं० २७४ ] |
| ३६–प्रल्हादचम्पूः, | केशवपण्डितः | [ मित्र ३ वा. १४२७ ] |
| ३७–बकवधचम्पूः, | अज्ञातनामा | [ कुप्पु. ३ वा. २४५५ (B) ] |
| ३८–बालकृष्णचम्पूः | जीवनकविः | ( बम्बई मुद्रिता ) |
| ६९–भागवतचम्पूः, | अज्ञातनामा | [ कुप्पु. ३ वा. २६०८ (B) ] |
| ४०– ,, | चिदम्बरकविः | [ तं नं० ४०६७ ] |
| ४१– ,, | रामभद्रः | [ ,, ४०६९ ] |
| ४२– ,, | वीरराघवाचार्यः | [ कुप्पु. ४ वा. ४१२२ (c) ] |

| | | |
|---|---|---|
| ४३- ,, | सोमशेखरः कोल्लूरी | [ ,, ३ वा. २२९५ (a) ] |
| ४४-भारतचम्पूप्रबंधः, | नारायणः | [ ,, ४ वा. ३७९३ (c) ] |
| ४५-भार्गवचम्पूः. | रामकृष्णसूरिः | ( बम्बई मुद्रिता ) |
| ४६-भिल्लकन्यापरिणयचम्पूः, | अज्ञातनामा, | [ कुप्पु. १ वा. ३६६ (f) ] |
| ४७-मद्रकन्यापरिणयचम्पूः, | गङ्गाधरकविः | [ कुप्पु. ४ वा. ४१३८ (c) ] |
| ४८-माधवानलकामकन्दलाकथाचम्पूः, | अज्ञातनामा, | ( काश्मीर ८१ पृ. ) |
| ४९-मानवेदचम्पूभारतम्, | मानवेदमहाराजः ( कालीकट ) | [ कुप्पु. २ वा. १८५१ (c) ] |
| ५०-मारुतिविजयचम्पूः, | रघुनाथः | [ तंजौर नं० ४१०६ ] |
| ५१-मृगयाचम्पूः, | कविराजः, | [ कुप्पु. ४ वा. ३२१८ ] |
| ५२-युधिष्ठिरविजयचम्पूः, | गोपालकविः, | [ ,, ४ वा. ४१५० (c) ] |
| ५३-रामचन्द्रचम्पूः, | विश्वनाथसिंहः, | [ मित्र. १ वा. ७३ ] |
| ५४-रामानुजदिव्यचरितम्, | बकुलभूषणसूरिः, | [ कुप्पु ४ वा. ३४९३ ] |
| ५५-रामाभिषेकचम्पूः, | देवराजभट्टः, | [ ,, २ वा० १५१६ (a) ] |
| ५६-रामाभ्युदयचम्पूः, | रामाख्यकविः | [ ,, २ वा० १४०९ (B) ] |
| ५७-रामायणचम्पूप्रबन्धः, | अज्ञातनामा, | [ ,, ३ वा. २४३७ (B) ] |
| ५८-रुक्मिणीपरिणयचम्पूः, | वेङ्कटाचार्यः, | [ ,, ३ वा. २५४० (B) ] |

| | | |
|---|---|---|
| ५९–रुक्मिणीस्वयंवरचम्पूः, | चिदम्बरकविः, | [ ,, ३ वा. २४५५ (B) ] |
| ६०–वासुदेवानन्दिनीचम्पूः, | गोपालकृष्णः | [ Rice २५२ ] |
| ६१–विक्रमसेनचम्पूः, | नारायणरावमन्त्री, | [ कुप्पु. ५ वा. १९०७ (c) ] |
| ६२–विरञ्चिनाथचरितचम्पूः, | नवनीतकविः | [ कुप्पु. ४ वा. ३९२५ (c) ] |
| ६३–वीरभद्रविजयचम्पूः, | एकाम्रदीक्षितः | [ ,, १ वा. ४१८ (B) ] |
| ६४–वृन्दावनविनोदचम्पूः, | रुद्रन्यायवाचस्पतिः | [ सरस्वतीभवन बनारस ] |
| ६५–शिवचरित्रचम्पूः, | कविवादिशेखरः | [ कुप्प. ४ वा. ४१४७(B) ] |
| ६६–श्रीनिवासचम्पूः, | वेङ्कटाध्वरी, | ( बम्बई मुद्रिता ) |
| ६७–श्रीनिवासचम्पूः, | श्रीनिवासः | [ तंजौर नं. ४१६१ ] |
| ६८–श्रीनिवासविलासचम्पूः, | वेङ्कटेशकविः | [ काव्यमालामुद्रिता ] |
| ६९–श्रीनिवासमुनियात्राविलासः, | गोविन्ददासः | [ कुप्प. ३ वा. २१२३ (a) ] |
| ७०–श्रीनिवासयात्राविलासचम्पूः, | श्रीनिवासरामानुजयतिः, | [ कुप्पु. ३ वा. २१२४ (a) ] |
| ७१–सात्राजितीपरिणयः, | गाङ्गेयकविः | [ कुप्पु. ३ वा. १९७८ (a) ] |
| ७२–साहित्यतरङ्गिणीचम्पूः, | कृष्णः, | ( काव्यमालामुद्रितो ) |
| ७३–सुभद्राहरणचम्पूः, | अज्ञातनामा, | [ कुप्पु. ३ वा. २४५५ (a) ] |



# श्रीमित्रमिश्रः ।

साम्प्रतं मुद्रिताया आनन्दकन्दाभिधायाश्चम्वा निर्माता श्रीमन्मित्रमिश्रो लोकविदितवैदुष्यो गोपाचल ( ग्वालियर ) निवासी, दूरवारकुलोत्पन्नः, पञ्चगौडान्तःपातिनीं सनाढ्याभिधानां ब्राह्मणजातिमलञ्चक्रे। श्रीमतो हंसपण्डितस्य तनूजः परशुराममिश्रोऽस्य पिता । सोऽयं परशुराममिश्रोऽपि यज्ञादिकर्मप्रवणः काशीनिवासिनः श्रौतस्मार्त्तक्रियाकलापनिपुणाच्चण्डेश्वराख्यात् गुरोः विद्या अध्यैत, इति मित्रमिश्रेण स्वयमेव वीरमित्रोदयाख्यधर्म(१) शास्त्रनिबन्धारम्भे विवृतम् ।

किं च यवनसम्राजशहाजहांसभायामपि कश्चित् परशुरामो-(२)वाणीरसालरायापरनामासीत । एतयोर्द्वयोरेकतानिश्चयोपक्रमे वाणीरसालरायापरनाम्नः परशुरामस्य शाकद्वीपीयब्राह्मणवंशसंभवत्वं बाधकं मनुवे, इति ।

अपि च—स्ववंशवर्णनमनेकैः पद्यैः कुर्वाणेनापि मित्रमिश्रेण स्वगोत्रोल्लेखो न कुत्रापि विहितः । परन्तु शाण्डिल्यगोत्रे जन्म लेभ इति ( ३ )धर्मय्यदीक्षितकृतायामद्वैतविद्यातिलकदर्पणाख्यायां टीकायां प्रतिपादितम् ।

तथाहि—

"अस्ति प्रशस्तचरितो भुवि मित्रमिश्रः

( १ ) काशीचौखम्भासंस्कृतग्रन्थमालायां प्रकाशिते परिभाषाप्रकाशे कविवंशवर्णनश्लोकाः—(२८—३९)

( 2 ) See "Paraśurāma Miśra alias Vāṇi Rasala Raya" by Gopinath Kaviraj M. A., [ Sarasvati Bhavana Studies, Vol. II ]

( ३ ) सरस्वतीभवनग्रन्थमालायां पं० गणपतिलालझाशर्मणा प्रकाशिते 'अद्वैतविद्यातिलके' १ पृ०

शाण्डिल्यगोत्रकलशाम्बुधिलब्धजन्मा ।
पुंसः परस्य हृदयङ्गमकौस्तुभोऽसौ
सर्वासु दिक्षु विततोर्जितकीर्तिराशिः ॥ इति ।

आनन्दकन्दचम्पूकाव्यसमाप्तौ तु मित्रमिश्रेण 'वीरेश्वरचक्रपाणी द्वौ ज्यायांसौ, योगादित्यश्च कनिष्ठो भ्राता, इति मम (१)त्रयो भ्रातर आसन्नि'त्युक्तम् । सनाढ्यब्राह्मणवंशोद्भवत्वमपि च तेनैव सूचितम् ।

तथा चायं वंशवृक्षः—

( ग्वालियरवासी शाण्डिल्यगोत्री )

श्रीहंसमिश्रः ( दूरवारकुलीनः )

|

परशुराममिश्रः [ सनाढ्यब्राह्मणः ]

|

वीरेश्वरः, चक्रपाणिः, मित्रमिश्रः योगादित्यः सुनीतिः [ कन्या ]

# मित्रमिश्रविभूषितो वीरसिंहः ।

(२) ओरछाधिपतिर्वीरसिंहोऽसौ बुन्देलाभिधक्षत्रियवंशावतंसः सकलराजन्योत्तंसः संस्कृतभाषाप्रेमा परमधार्मिकश्चासीत् । वंशस्यास्य बुन्देलाख्या कथं कदा प्रवत्तृत इति पर्यालोचने प्राचीनेयं (३)जनश्रुतिरस्माकमग्रे प्रस्फुरति ।

यथा—'राज्ञोवीरभद्रस्य पञ्चपुत्रा आसन्, तेषु चत्वारो महिष्याः, एकश्च हेमकर्णः साधारणसहधर्मिण्याः' । ते च चत्वारो लुब्धमतयः राज्यं स्वाधिकारे विधाय हेमकर्णं निर्वासितवन्तः । निर्वासितो हेमकर्णो विन्ध्यक्षेत्रे विन्ध्यवासिनीमाराधयंस्तस्यास्तुष्ट्यै खड्गेन स्वशिरश्छिकर्तिषुमना बभूव । अत्रान्तर एव देवी प्रसन्ना तस्मै समीहितं

(१) आन्दकन्दचम्पू ८ उल्लासे ९९—१०२ यावत् श्लोका विलोकनीयाः।

(२) साम्प्रतं बुन्देलखण्डराजधानी 'टीकमगढ' नाम्नी वर्त्तते ।

(३) १९२९ ई० काशीनागरीप्रचारिणीसभाद्वारा प्रकाशिते छत्रप्रकाशग्रन्थे ।

वरमदात्। खड्गधाराक्षतशरीराद् यो रुधिरबिन्दुस्तत्र मन्दिरे पपात, तेनैवैते क्षत्रिया बुन्देलाभिधेया लोके प्रथिता बभूवुः, इति।

यवनसम्राजो जहांगीरस्यानुगृहीतो—सोऽयं वीरसिंहमहाराजः १६०५—१६२७ खिस्ताब्दं यावत् ओरछा(१)मनुशशास। मित्रमिश्रोऽपि वीरसिंहस्यास्यैव समाश्रये सुखं निवसन् निबबन्ध ग्रन्थाननेकान्। वीरमित्रोदयाख्यं धर्मशास्त्रनिबन्धं को न जानाति विद्वान्।

अपि च आनन्दकन्दचम्पूकाव्ये मित्रमिश्रेण ओरछाराजधानीं प्रस्तुत्य राज्ञो वीरसिंहदेवस्य चातुर्वर्ण्यसंरक्षकत्वमुपवर्णितम्।

यथा—

'सांनाढ्यैः सन्नयाढ्या सुकृतिभिरतुलैरुज्ज्वला कान्यकुब्जैः
शाकद्वीपीयसारस्वतकृतसुषमा मालवाबद्धमाला।
पाश्चात्यैर्दाक्षिणात्यैर्मधुमथनपदार्थीभवच्चित्तवित्तै-
रुद्यद्विद्याकवित्वैर्द्विजपतिभिरसावोडछा(२) संबभासे॥
[८ उ० ६२]

भूदेवैः क्वापि देवैरिव निखिलजनारब्धसेवैः सदैव
क्षत्रैः कुत्रापि चित्रा स्वकृतिषु निपुणैः क्वापि वैश्यैरुपास्या।
अक्षुद्रैः क्वापि शूद्रैर्विहितसमुदयाऽगाधविद्यासमुद्रै—
र्धन्यासावोडछापूरवति मम चतुर्वर्णसृष्टीरभीष्टाः॥
[८ उ० ६४]

वीरसिंहदेवो वदान्यतायां धार्मिकतायाश्च परमास्पदं बभूवेति आनन्दकन्दचम्पूग्रन्थान्तरष्टमोल्लास एव (श्लो. १४-२३) विलोकनीयमिति नात्र पिष्टपेषणं कुर्मः।

वीरसिंहदेवेन बहूनि तुलादानानि व्यधायिषतेति मित्रमिश्रेणानन्दकन्दचम्प्वां वचोगुम्फविशेषेण समसूचि।

---

(१) इम्पीरियल् गजेटियर न्यू एडिशन् वा. १९ पृ० २४३।

(२) चन्दबरदाईकृतं 'ओरछासमयो" पुस्तकं टीकमगढपुस्तकालये वर्त्तते।

तुलयिष्यति यत्कदाचिदेनं स न भूतो न च वा भविष्यतीति ।
वसुधापतिसिंहवीरसिंहः स्वयमेव स्वतुलां व्यधत्त भूयः ॥
[ ८ उ० ३२ ]

( १ ) एषु तुलादानेष्वेकाशीतिमणपरिमितं सुवर्णं, राज्ञा विप्रेभ्यो दत्तम् ।

मन्दिराण्यपि वीरसिंहदेवेन बहूनि निर्मापितानि। तेष्वेकं सुन्दरमद्वितीयं मन्दिरमोरछानगर्यामेव विराजमानं चतुर्भिर्हस्तैश्चतुर्णां धर्मार्थादिचतुःपुरुषार्थाणां दातुर्भगवतश्चतुर्भुजस्य विष्णोर्वर्वर्तितराम् ।

भगवतः श्रीकृष्णस्य (केशवस्य) द्वितीयं मन्दिरं मथुरायां वीरसिंहदेवेन श्रीमित्रमिश्रद्वारा निर्मापितम् । तन्निर्माणे त्रयस्त्रिंशल्लक्षमिता मुद्रा व्यायन् । मन्दिरमिदं यवनसम्राजा औरंगजेबाभिधानेन स्वकीर्त्या सहैव विनाश्य १०७१ ( २ )हिजरीवर्षे १६६१ खिस्ताब्दे तत्स्थाने "जुम्मामस्जिद" इत्याख्यं सदनं निर्मापितमिति जुम्मामस्जिद् स्थाने निविष्टात् फारसीभाषामयशिलालेखात् स्पष्टं प्रतीयते ।

मन्दिरस्यास्य निर्माणानन्तरं च मित्रमिश्रेण श्रीकृष्णचरितसम्बद्धमिदमानन्दकन्दचम्पूकाव्यं प्रणीय तन्मन्दिरं च बहुभिः पद्यैर्मन्दिरालौकिकसुषमाविद्योतकैरुपवर्णितम् ।

यथा—

यः सौन्दर्यमये मुकुन्दनिलये दत्ते क्षणं वीक्षणं
स्थाणुर्वा पुरुषोऽथवेति वलते तस्मिन् सतां संशयः ॥
नाश्चर्यं तदपि प्रतीहि यदसावाश्चर्यभूमा मुने
पाषाणप्रतिमामिषोढजडिमा तस्मिन् रमावल्लभः ॥

---

( १ ) नागरीप्रचारिणीपत्रिकायाः ३, ४ अङ्कयोः प्रकाशिते "बुन्देलों का इतिहास" ग्रन्थे २७ पृष्ठे ।

( २ ) आर्केओलाजिकल् रिपोर्ट आफ नार्थ वेस्टर्न प्राविन्सेज् पृ० १०६ ।

भूयिष्ठानि पदानि कैटभभिदः प्रेष्ठानि भूमण्डले
तत्रासौ मथुरा नितान्तमधुरा तत्रापि तन्मन्दिरम्।
तत्किं नारद वेदयामि विदितं ते भाति सर्वं पुरो
बुन्देलापतिचेतसीव मुरजित्तत्रैव चित्रायते॥

नाधिकमस्माभिरत्र चर्वितं चर्वणीयम्। मन्दिरवर्णनपराणि पद्यानि चम्पूकाव्यान्तःपातिन्यष्टमोल्लासे (७०-९३) विलोकनीयानि।

## मित्रमिश्रसमयः।

वीरसिंहराज्यकाले समुपस्थितत्या यद्यपि मित्रमिश्रस्य समयो १६०५-१६२७ खिस्ताब्दं यावन्निर्णीत एव वर्त्तते। तथापि सूक्ष्मेक्षिकया विचार्यमाणे मीमांसेयमुल्लसति यन्मित्रमिश्रो न केवलं वीरसिंहराज्यकाल एव समुपस्थितः, अपि तु तत्पुत्रपौत्रादिराज्यकालेऽपीति।

वीरमित्रोदयीयपरिभाषाप्रकाशे श्रीमता मित्रमिश्रेण बुन्देलमहाराजानामन्ववाय इत्थं प्रदर्शितः।

मेदिनीमल्लः ( काशीराजवंश्यः )
|
अर्जुनः
|
मलखानः
|
प्रतापरुद्रः ( ओरछाप्रतिष्ठापकः )
|
मधुकरशाहः
|
वीरसिंहदेवः ( श्रीमन्मित्रमिश्रविभूषितः )
|
जुझारसिंहः
|
श्रीविक्रमादित्यः
|
नरसिंहदेवः ( ६-२७ यावत्पद्यानि )

अत्र यद्यपि विक्रमादित्यनरसिंहदेवनामनी इम्पीरियल्गजेटियर-ग्रन्थे नोपलभ्येते, तथापि—विक्रमादित्यस्य, जुझारसिंहतनयतया नि-र्देशः फारसीग्रन्थे "मआसि(१)रुल्—उमरा" नामकेऽपि समधिगम्यते । जोगराजापरनामा विक्रमादित्यः १६६६ वैक्रमाब्दे समुत्पन्न इत्यपि च निर्णी(२)यते ।

किं च जुझारसिंहस्य पौत्रतया नरसिंहदेवस्य समुल्लेखं खफीखांनिर्मिते फारसीग्रन्थेऽपि विलोकयामः (३) ।

इत्थं श्रीमन्मित्रमिश्र ईशवीयसप्तदशशताब्द्या द्वितीयभागे समु-पस्थित आसीदिति निश्चप्रचम् ।

## मित्रमिश्रग्रन्थाः ।

प्रथितं च लोके मित्रमिश्रस्यालौकिकं पाण्डित्यमिति नात्र वक्त-व्यमवशिष्टम् । धीरधीधुरीणेनानेन बहवो ग्रन्था निरमायिषत । तत्र वीरमित्रोदय ( धर्मशास्त्रनिबन्धे ) एव लक्षद्वयमिता श्लोकसंख्या वर्त्तते । अत्र वीरमित्रोदये प्रकरणपरिच्छेदका द्वाविंशतिप्रकाशाः समुल्लसन्ति । तेष्वादिमा अष्टप्रकाशास्तु काश्यां चौखम्भासंस्कृतग्र-न्थमालायां ( चौखम्भासंस्कृतसीरिज् ) मुद्रणामायिताः ।

[ १ ] वीरमित्रोदयः ( धर्मशास्त्रे निबन्धग्रन्थः )

एतस्य द्वाविंशतिप्रकाशास्त्विमे—

---

( १ ) मआसिरुल्—उमरा, फारसी, जि० १, पृ० ७२९ ।

( २ ) नागरीप्रचारिणीपत्रिका सं० ११७७, पृ० ११९, २०२ ।

( ३ ) खफीखां, जि० १, पृ० ९११, ९२३, पृष्ठ ।

| | |
|---|---|
| १—परिभाषाप्रकाशः, | १२—व्रत० |
| २—संस्कार०, | १३—समय० |
| ३—आह्निक० | १४—ज्यौतिष० |
| ४—पूजा० | १५—शान्ति० |
| ५—प्रतिष्ठा० | १६—कर्मविपाक० |
| ६—राजधर्म० | १७—चिकित्सा० |
| ७—व्यवहार० | १८—प्रायश्चित्त० |
| ८—शुद्धि० | १९—प्रकीर्णक० |
| ९—श्राद्ध० | २०—लक्षण० |
| १०—तीर्थ० | २१—भक्ति० |
| ११—दान० | २२—मोक्षप्रकाशः |

[२] याज्ञवल्क्यस्मृ(१)तिटीका ( वीरमित्रोदयाख्या )

[३] वीरमित्रोदयः ( गणितग्रन्थः ) ( अमुद्रितः खण्डितः काशिकराजकीयपुस्तकालये वर्त्तमानश्च )

[४] आनन्दकन्दचम्पूः ( प्रस्तुतेयम् )

समुचितपर्यालोचनेनायं विचारो दृढीभवति यन्मित्रमिश्रः पण्डितान्तरद्वाराऽनेकान् ग्रन्थान्निर्मापयामासेति । यथा वीरमित्रोदयीयसंस्कारप्रकाशनिर्माता रामज्योतिर्वित् पण्डित इति स्पष्टं भण्डारकरमहाशयसम्पादिते सूचीपत्रे (२) । वीरमित्रोदयाख्या याज्ञवल्क्यस्मृतिटीकापि तीरभुक्ति( मिथिला ) निवासिना श्रीसदानन्दविदुषा विरच्य मित्रमिश्रनाम्ना विख्यापिता ।

यथाचोक्तं याज्ञवल्क्यस्मृतिटीकाप्रारम्भ एव—

---

( १ ) श्रीमता नारायणशास्त्रिखिस्तेसाहित्याचार्येण काशिकचौखम्भासंस्कृतग्रन्थमालायां प्रकाशितेयम् ।

( २ ) ए रिपोर्ट आन् दी सर्च् फार संस्कृतमनस्क्रिप्ट्स, डुरिङ्ग दी ईयर १८८१—८२ बाई आर. जी. भण्डारकर । १ जून १८८२ । २३ पृष्ठ ।

"उत्तंसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्
श्रीभाजो मित्रमिश्राज्जगदुपकृतये बिभ्रदादेशदीपम् ।
ज्ञानानां दैन्यदोषापहमकलिभयं याज्ञवल्क्योक्तिकोशाद् —
दृष्ट्वा स्मृत्यर्थसारं समुचिनुत यशो धर्मलक्ष्मीविहारम् ॥" इति ।

अथ तृतीयो वीरमित्रोदयाख्यो गणितग्रन्थोऽपि रामदैवज्ञेनैव निर्मितः । यथा च तत्प्रारम्भे—

"दैवज्ञरामेण कृते वीरमित्रोदयाभिधेये ।
तद्व्याख्याने शिवकृते स्पष्टं खेटप्रसाधनम् ॥ ७७ ॥

अथ त्रिप्रश्नाधिकारो व्याख्यायते । तत्रादौ प्रयोजनमाह—

कालं दिशं देशमथो विवेकं ज्योतिर्विदां मूढमतीन्विलोक्य ।
त्रिप्रश्नमाख्याति विमृश्य रामः श्रीवीरसिंहाख्यनृपस्य तुष्ट्यै (पृ २८)
( वाराणसेयसरस्वतीभवने )

किं च समरपुङ्गवदीक्षितविरचिते 'अद्वैतविद्यातिलके' दर्पणनाम्नी(१) टीका धर्म्मय्यदीक्षितेन मित्रमिश्रप्रेरणया निर्मिता ।

उक्तं च तेनैव—

"अद्वैतविद्यातिलकाभिधाना शम्भोः स्तुतिः सामरपुङ्गवीया ।
तनोति टीकां बुधमित्रमिश्रसम्प्रेरितो धर्म्मयदीक्षितोऽस्याः॥" इति ।

## आनन्दकन्दचम्पूः ।

आनन्दकन्दचम्पूरियं दुष्प्राप्या, साम्प्रतं गवेषणाव्यसनिभिरपि त्रिष्वेव स्थानेषु समुपलब्धा । तत्रैतस्या एकं पुस्तकं डा० आर० जी० भण्डा(२)रकरमहाशयेन बम्बईप्रान्ते समुपलब्धं द्वितीयोल्लासान्तमेव । तदपि राजकीयपुस्तकालयेऽवर्त्तमानं दुरधिगमं सर्वजनाप्राप्यं च । अत एव चामुष्य प्रारम्भिकचरमभागावत्रोद्ध्रियेते ।

---

( १ ) सरस्वतीभवन टेक्स्ट्स् नवम्बर ३४ सन् १९३० ।

( २ ) ए लिस्ट् आफ् संस्कृतमनस्क्रिप्ट्स् इन प्राइवेट् लाइब्रेरीज् इन दी बम्बई प्रेसीडेन्सी बाई आर० जी० भण्डारकर, पार्ट १ नं० २५८, सन् १८९३ ।

## प्रारम्भिकभागः ।

(१)श्रीमद्रामपदाब्जं स्वस्तुत्याकर्णनेऽनतिमलज्जम् ।
निजशरणदानसज्जं वन्देऽस्य सविधे धनुर्विसज्यम् ॥ १ ॥

## चरमभागः ।

यद्वन्द्यमुद्यमं विन्ध्यो विधायाज्ञां दधे गुरोः ।
तदभूत्पार्वतीधाम गुर्वधीना हि सिद्धयः, ॥
इतिश्रीमन्मित्रमिश्रकृते द्वितीय उल्लासः ॥ २ ॥

पत्राणि २०, पङ्क्तयः ६, अक्षराणि ४४७, ग्रन्थसंख्या ४९५ । इति ।

आनन्दकन्दचम्प्वा द्वितीयं पुस्तकं भूतपूर्वाणां लवपुरनिवासिनां पं० राधाकृष्णमहोदयानां गेहे समुपस्थितमासीत् । तदपि च दुरधिगममेव ।

तृतीयं चास्याः पुस्तकं वाराणसेयराजकीयपुस्तकालये (सरस्वतीभवने ) विद्यतते साम्प्रतम् । यदाधारेणैव चेदं मुद्रणं सुसम्पन्नम् ।

## रचनाशैली ।

अत्र कविना प्रायः सर्वत्रैव ओजस्विनी वाक् संदृब्धा, गौडीया रीतिश्च पदे पदे समादृता. हर्षचरितसमुपात्ता बाणसूक्तिरनुसृतेति नितान्तं वदामः ।

यथा भट्टबाणगीः—

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः ॥
( हर्ष च० १ उ० ७ श्लो० )

किंच कविना प्राचीनकविकल्पनानामपि समादरो विहितः । समुचितश्च सः । यथा चाह स्म वामनः काव्यालङ्कारे 'अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च' ( ३ अधि० २ अ० ७ सू० ) । अन्यस्य काव्यस्य छाया अन्यच्छाया तद्योनिरिति ।

( १ ) अयं श्लोकः प्रस्तुतपुस्तके नोपलभ्यते ।

प्रकृते तु—

बद्धोपान्ताः कनकनिकरैः पद्मरागानुविद्धै-
रिद्धैर्नानामणिभिरधिकोन्नद्धसोपानवीथीः ।
वापी रम्भोरुहवलयिता यत्र हंसा सवंशाः,
संवीक्षन्ते हुतवहधिया सन्निधौ न प्रयान्ति ॥ ( १ उ. ४९ )

आनन्दकन्दचम्पूश्लोकोऽयं—

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्नाः विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ( १३ )

उत्तरमेघदूतश्लोकेन सह संवादमातनुते । इत्यादि ।

अपि च कविना देशभाषाप्रथितानामपि शब्दानामत्र समादरो विहितः ।

यथा—

उदञ्चति कचोरिका मधुरिका मनश्चोरिका
सुधारसपुरी पुरी न लुचिवीसमोर्वीतले ।
हरेर्हरिणलोचनाहरिणहीनचन्द्रानन-
त्रपोषितसुधानिधिः सुमधुवाटिका रोटिका ॥ (५उ.१४श्लो.)

गोवर्धनाद्रिवर्णनावसरे कविना श्लेषपरिसंख्याप्रभृतयोऽलङ्कारा अपि समादृता इति विरमामो वयं भूमिकागौरवभयात् । तत्सर्वं ग्रन्थ एव विलोकनीयम् ।

## आनन्दकन्दचम्पूनिर्माणकालः ।

यद्यपि मित्रमिश्रसमये विदिते काव्यस्यास्यापि समयो निर्णीत एव, तथापि सूक्ष्मविचारोऽयं मनसि समुल्लसति ।

तथाहि—मित्रमिश्रः स्वयमेव ग्रन्थावसाने ग्रन्थनिर्माणसमयमस्फोरयत् ।

यथा—

प्राप्य श्रीमित्रमिश्रोऽयमतमिस्रत्रयोदशीम् ।
अतुलां स तुलां सूरे गते चम्पूमपूरयत् ॥ ( ८ उ. १०४ )
मीनारोहिणि रोहिणीसहचरे कृत्वान्तिके रेवतीं
याते चण्डमरीचिमालिनि तुलां वारे च वाचस्पतेः ॥
शाके शाङ्कगजर्तुभूपरिमिते ह्यानन्दकन्दाभिधां
चम्पूं पूरितवान्सितस्मरतिथौ श्रीमित्रमिश्रः कृती ॥१०५॥

अत्रायं विवाद उत्तिष्ठते । शाकवत्सरस्य सप्तदशशताब्द्यां (=खिस्ताब्दस्याष्टादशशताब्द्यां) मित्रमिश्रस्थावस्थितिरसंभविनी । यतो हि मित्रमिश्रस्य सत्ता बुन्देलभूपालवीरसिंहसमये निश्चितैव । वीरसिंहराज्यकालोऽपि च यवनसम्राजजहांगीरराज्यकाले१६०५–१६२७ खिस्ताब्दावधिक इत्यपि प्रमाणानां शतं निश्चाययति । एवं सत्यां विप्रतिपत्तौ श्लोकोक्तः शाकशब्दः केवलं वत्सरार्थवाची बोद्धव्यः । गृह्यते च ज्योतिर्विद्भिः शाकशब्दः संवत्सरार्थकोऽपि । ततश्चायमर्थः प्रतिभासते, यदयं ग्रन्थो विक्रमवत्सरस्य सप्तदशशताब्द्यां निर्मित इति ।

किंच "शाङ्कगजर्तुभूपरिमिते" इत्यत्र विशेषाशुद्धिः प्रतिभाति। अङ्कानां वामतो गत्या—

भू=१, ऋतु=६, गज=८, शाङ्क=(?) इत्यत्र १६८ एतेऽङ्कास्तु नियता एव । चतुर्थः शाङ्कशब्देन बोध्योऽङ्कः कः इति विचिकित्सायां चेतसि कृतपदायां "मीनारोहिणि" इति श्लोकोक्तनक्षत्रादिपर्यालोचनेन गणनावकलनेन चायं निश्चयो दृढीभवति ।

तथाहि—१६८०—१६८९ विक्रमवत्सरेषु १६८५ वर्षे, १६८८ वर्षे च कार्तिकशुक्लत्रयोदशी गुरुवारयुता रेवतीनक्षत्रभूषिता मीनचन्द्रयुता च समधिगम्यते(१) । एतौ द्वावप्यब्दौ वीरसिंहपश्चाद्भाविनावेव ।

( १ ) दृश्यताम्—"एन् इन्डियन् एफेमेरीज्" वा ६ पृ० ९९, ६५ । गवर्नमैण्ट प्रेस मद्रास १९२२ ई० ।

(१) उररीकृतं च पी० वी० काणे महाशयेन वीरसिंहनिर्वाणोत्तरमपि मित्रमिश्रकर्तृकग्रन्थप्रणयनम् । तेन शाकेपदस्थाने समानश्रुतिकल्पं "साष्ट" पदं समारोप्य १६८८ वैक्रमाब्दे ( =१६३२ ए. डी. ) ग्रन्थस्यास्य निर्मितिरिति निश्चीयताम् ।

एवं च 'शाके साष्टगजर्तुभूपरिमिते' इति पठनीयमापतति ।

## मुद्रणाधारीभूतं पुस्तकम् ।

पुस्तकमिदं पौषमासे शुक्लपक्षे ११ गुरुवासरे १९२६ विक्रमवत्सरे लिखितम् । यद्यपि नातिप्राचीना लिपिस्तथापि पुस्तकमदोऽत्यन्तमशुद्धम्, संशयास्पदानि चाक्षराणि, इत्यत्र शोधने प्रवृत्तेन मया महत् काठिन्यमनुभूतम् । नाधिकं वक्तुमीहे, केवलमिदमेवाभिधाय संतोषमश्नुवे, यत्पुस्तकस्यास्य शोधनं बुद्धेरतीतमिति ।

अशुद्धिप्रचुरस्य पुस्तकस्य स्वल्पेनैव कालेन सम्पादनात्, बुद्धेरनवधानात्, मुद्राकरदोषाच्च, मानवसुलभा अशुद्धयोऽत्र संभाव्यन्ते । कृपया गुणैकपक्षपातिभिर्धीधुरीणैस्ताः परिशोध्य प्रबोधनीयोऽयं जन इति साञ्जलि सानुरोधं च प्रार्थये ।

अन्ते च, येषां चरणसेवया मया ज्ञानमिदं समासादितम् ।

यैश्चात्र कर्मणि नियोजितोऽभवम् । तेषां प्रातःस्मरणीयचरणानां प्रभुवराणां काशिकराजकीयसंस्कृतपाठालयाध्यक्षाणां श्रीगोपीनाथकविराज एम० ए० महानुभावानामुपकृतिमविस्मृत्य दैनन्दिनं समुदयं कामयेऽहम्—

सरस्वतीभवनम्
( गवर्नमैण्ट संस्कृत कालेज )
वाराणसी
१९८८ विक्रमवर्षारम्भदिने ।

कथाभट्टश्रीजयचन्द्रजन्मा
साहित्याचार्यः
**श्रीनन्दकिशोरशर्मा ।**
( जयपुराभिजनः )

---

( १ ) हिस्ट्री आफ् धर्मशास्त्र, बाई पी. वी. काणे, गवर्नमैण्ट ओरियण्टल् सीरीज्, वा. १ पृ. ४२६, सन् १९३० बम्बई ।

॥ श्रीः ॥

श्रीमन्मित्रमिश्रविरचिता

# आनन्दकन्दचम्पूः ।

## प्रथम उल्लासः ।

(१) भक्ते सद्मयुतामिवाम्बुधिसुतां निक्षेप्तुमभ्यर्हते
दातुं विघ्नघटाभिघाटनमुरीकृत्येव तत्प्रत्ययम् ।
दानाम्भोलहरीभिरार्द्रमुररीकुर्वाणमम्भोरुहं
हेरम्बस्य करं भजे भगवतः क्रीडाजुषो मानसे ॥ १ ॥

वंशपांशुमहांसविंशतिभुजस्तम्भालिरम्भायित-
व्यालोलीकृतशम्भुभूभृति दशग्रीवे सुरा दुद्रुवुः ॥
उद्बुद्धालसलेशनद्धनयनः सान्दोलहिन्दोलिका-
क्रीडालीढमना दिशन्नविमनः शं वोऽस्तु लम्बोदरः ॥ २ ॥

---

(१) निष्प्रत्यूहग्रन्थपरिसमाप्तये हेरम्बस्य शुण्डादण्डं स्तौति "भक्ते" इत्यादिना । सद्मयुतां कमलसदनयुतां पद्मायाः पद्मालयात्वात् । अम्बुधिसुतां लक्ष्मीं भक्ते निक्षेप्तुमिव । तथा विघ्नघटाभिघाटनं विघ्नसंघविनाशमुरीकृत्य । अभ्यर्हते योग्याय भक्तायेति यावत् । तत्प्रत्ययं विघ्नघटाभिघाटनविश्वासं दातुमिव । अम्भोरुहं कमलमुररीकुर्वाणं तथा दानाम्भोलहरीभिरार्द्रम् । क्रीडासक्तस्य भगवतो हेरम्बस्य शुण्डादण्डं मानसे ध्यायामि ॥ १ ॥

कुम्भीन्द्रोद्भटकुम्भकूटकठिनप्रारम्भसम्भावित-
प्रालेयाचलनन्दिनीस्तनतटे बिम्बात्तनोरात्मनः ।
कः स्तन्यं धयति स्तनन्धय इति क्रोधान्धभावोद्धता
हेरम्बस्य गभीरहुङ्कृतिगणा विघ्नान्विनिघ्नन्तु वः ॥ ३ ॥
गम्भीराम्भोधिभङ्गोत्तरलतरतरीतुल्यभूचक्रवालं
व्यग्रव्यालेन्द्रमिन्द्रे दधति पल(१)भुजामद्रिमुद्धर्तुमौग्रम् ॥
निद्राभङ्गादपाङ्गावलदलसमदद्भ्रूपुटीभ्रूकुटीभाक्
शं वो लम्बोदरोऽव्यात्प्रलयघनघटाटोपनाटीरवेण ॥ ४ ॥
कदाचित्कर्पूरैः कुचकलशयोः सीम्नि हरिणा
विनाकूतं वीणाललितललना कापि लिलिखे ॥
श्रियस्तां पश्यन्त्या मुकुलितदृगन्तस्मितलवं
चलत्कर्णोत्तंसं जयति शिरसो धूननविधिः ॥ ५ ॥
(२)कराम्भोजे कञ्जी मदनमदभञ्जी पदजुषां
मनःपुञ्जारञ्जी मुखरमणिमञ्जीरचरणः ।
कलाकूतव्यञ्जी व्रजयुवतिसञ्जी जलमुचां

---

( १ ) राक्षसनाम् ।

( २ ) कराम्भोजे कञ्जोऽस्यास्तीति कञ्जी । तथा मदनगर्वविनाशी । भक्तानां मनःपुञ्जमासमन्तात् रञ्जयतीति तथोक्तः । अत्र सापेक्षत्वेऽपि गमकत्वात्समासः । यथा 'शरैः शातितपत्रः" "देवदत्तस्य गुरुकुलम् " इति च भाष्ये । कलया कयापि भङ्ग्याऽकूतप्रकाशकः । व्रजयुवतिसहितः सञ्जोऽस्यातीति सञ्जी "षञ्ज सङ्गे" इति भौवादिको धातुः । तथा तिरस्कृतजलदगम्भीरकान्तिः ।

स कृष्णः मम परमं जीवनधनम् ॥ ६ ॥

गभीराभागज्ञी मम स परमं जीवनधनम् ॥ ६ ॥
छन्दः स्वच्छन्दभावः पदमपि च पदं तेऽभिधा चाभिधेयं
शुद्धा रीतिश्च रीतिं रसमपि रसना स्रग्गुणः स्रग्गुणौघम् ॥
व्यङ्ग्यं व्यङ्गश्च मध्यो जननि मणिमयालङ्क्रियालंक्रियां च
भ्रूभङ्गी वाग्विभङ्गीं मम वदनदरीद्वारि दीर्घं प्रसूताम् ॥७॥
नीलं धाम दधाति नाम मथुरा तां मूर्द्धि धत्ते धरा
तां मूर्ध्ना भजते भुजङ्गमपतिस्तेभ्यः किमाचक्ष्महे ॥
त्रैलोक्यं तृणवत्तनुस्थमविदन्यस्तं दधन्मोदते
तस्मै भक्तिजडायमानवपुषे कूर्माय कूर्म्मो नमः ॥ ८ ॥
दोषोद्वारे दशास्यो गुणगणगणने यः खरो दूषणाख्यो
मौखर्य्ये मेघनादः परमपरशुभाकर्णने कुम्भकर्णः ।
वैभीषण्यं च भेजे परिषदि यदभूज्जानकी प्रौढबाधा
स्याच्चेत्सोद्यापि जीवी खलप(१)लभुगहो राघवेन्द्रः सहायः ९
दोषासौन्दर्य्यकृद्यः कुजनुषमपि यः सौमनस्यैः प्रकुर्व-
न्प्रख्यातं क्षोणिचक्रे सफलयति परिद्वेष्टिचक्रं हठाद्यः ।
यश्चक्रे पङ्कभूतं कुमुदमपि समालम्बमात्रं सदालेः
सोऽन्तःप्रोद्यत्प्रसादो विधुरिव सुजनः स्यान्नु किं सर्वमूर्द्धि १०
प्रारम्भि मित्रमिश्रेण विबुधानन्दवर्द्धिनी ।
स्वर्णसम्पूरिता चम्पूरियं पूरिव भैरवी ॥ ११ ॥

अस्ति किल सकलमहीतलतिलकमनाकुलमतुलपदाभिरू-
ढ्यूढगरिम प्रौढमहिम व्यूढमधुरिम रमणीयतैकविश्रामधाम ताम-

(१) खल एव पलभुग् राक्षसः ।

रसजन्मनो निर्माणकौशलैकसाक्षिणी सा(१)क्षिणी सफलितवतीह पुण्यजन्मनो, जगदुपरिवरीयसी परमश्रेयसी सुकृतिकुलप्रेयसी मथुरा नाम नगरी न गरीयसी केषाम् ।

या हि मणिरिव परचिन्महामहसः खनिरिव महनीयहरिनीलमणेः, अविकुण्ठगरिमानिगमदरीव वैकुण्ठकण्ठीरवस्य, अतिदीर्घदर्शिदेवर्षिमानसमानसदीर्घिकेव शर्वरीधवधवलहलायुधगीर्वाणकुञ्जरस्य, भुजगपतिसाभोगभोगशय्येव भोगिराजबहुवदनजेगीयमानमहिमबहुनयनपेपीयमानमधुरिममधुरिपुनिभृतनिवासस्य, चतुरानन [ कृतिरि ] इव चक्रिरिपुचक्रचक्रकमलकौमोदकीकम्बुकमलाकौस्तुभादिविधानस्य, दम्भोलिपाणिरिव बहुविधविबुधसम्भारसम्भावितसुधर्माखर्वाङ्कितशर्म्मावहकर्म्मादिः, अधर्मादिविरतिश्च जम्भभेदिनो राजधानीव, उद्यानवनीवोद्यत्सुमनःप्रद्योतमानसन्तानपरम्पराभिरामा, द्यौरिव नक्षत्रमित्रद्विजपतिचित्रचरित्राचित्रिताभोगा, ज्योतिर्मयमण्डलीव रुचिरतमामन्दजीवमङ्गलानन्दकन्दसुन्दरमन्दिरा, निखिलविराजिराजकवीनबुधबहुविधभावलीवलितकेतुश्च, गम्भीरजलधिरिव भुवनाभिरामसम्भृतश्रीः ।

यां च कामधेनुमिव कामैकतानमनसः, कल्पलतामिव विगतविकल्पजल्पानल्पसंकल्पनिपुणाः, चिन्तामणिमिव चिन्तासन्तानसन्ततसतताशान्तसन्ततिसीमन्तिनीसान्त्वनोपायजर्जरस्वान्ताः, अतिशीतलसलिलसम्भारसम्भृतसरसीमिव शुचि-

(१) सा अक्षिणा इति पदच्छेदः ।

समयमध्यादिनसरमाहिद्दरमणशतकोटिकोटिकाठिमाकिरणकलापा-कुलचेतसो, विषहरणधुरीणमहामान्त्रिक[कौ] मिव कटु भूयिष्ठकालकूटगरलगरिष्ठनिष्ठुरदुष्टदीर्घपृष्ठदृष्टपरिमुष्टक्लिष्टमतयो, मातरमिव दुःसहक्षुधातिकातरतयातुरसुकुमारकिशोराः मद-नमदमेदुरप्रमदामिव यौवनोन्मादमाथितधैर्यतगाऽविचारितका-र्याकार्यैकदृर्यकामपरतन्त्राः, यमिनो निषेवन्ते ।

यया च शरदेव निशा, निशयेव चन्द्रिका, चन्द्रिकयेव च-न्द्रमण्डली, चन्द्रमण्डल्येव कुमुदपरम्परा, कुमुदपरम्परयेव दीर्घि-का, दीर्घिकयेव राजधानी, राजधान्येव जनधोरणी, जनधोर-ण्येव धरणिधवलक्ष्मीः, धरणिधवलक्ष्म्येव धरणिधवतनूः, अविकलसकलसमुत्तुङ्गमङ्गलालिङ्गिता शुशुभे वसुन्धरा देवी ।

यस्यै च महेन्द्रचन्द्रवरुणहुताशनशमनसमीरणधनपतिसन्न-रकिन्नराप्सरोगणगुणगरिमगभीरगर्वाखर्वगन्धर्वगीर्वाणादि-भिरपि महासम्पदो नाद्रियन्ते ।

यस्याश्च शातकुम्भकुम्भसुभगाडिम्भकुम्भीन्द्रकुम्भप्रतिम-कुचभारसम्भासितरम्भादिसम्भावितजम्भारातिसुरसम्भारसंवा-ह्यमानचरणाम्भोजानि कान्यपि पदानि तृणीकुर्वाणैः सर्वानि-र्वचनीयानि ब्रह्मसुखान्यनुभूयन्ते कृतिभिः ।

यस्याश्चबहुविधरमणीयतैकविश्रामधामस्वपि बहुविधमहि-ममहीयःस्वपि भूर्भुवःस्वरादिषु भुवनेष्वम्बरकमल–कूर्मलो-म-शशविषाण-वन्ध्यातनयसमानि खलु साम्यानि काम्यानि ।

यत्र च–अगणितगोलोकगरिमाभिकुण्ठितवैकुण्ठमहिमा-

वधीरितसनिधिपयोनिधिसपदि वियोजितयोगीन्द्रवृन्दमनोमन्दिरमभिखण्डितपुण्डरीकपतिमण्डलमध्यमण्डनं लक्ष्मीपतिरपि क्रीडामृग इव चिक्रीड ।

अहो चतुर्दशभुवनविभावनचतुरस्यापि चतुराननस्य न च वचसो न चेतसोपि गोचरो महिमा मथुरायाः ।

तथा हि ।

पुराणपुरुषः क्वासीत्पुराणेषु पुरेषु न ॥
पुराणानि प्रमाणानि मथुरैव नवं व्यधात् ॥ १२ ॥

मथुरार्णत्रयी तथ्यं त्रयीतोपि गरीयसी ।
अनुधावति सा ब्रह्म ब्रह्मैनामनुधावति ॥ १३ ॥

रंहोभिः संहरन्त्यहो निर्मात्यवति च श्रियम् ।
मन्ये गुणत्रयी मूर्त्ता मथुरेत्यक्षरत्रयी ॥ १४ ॥

तापत्रयहरी पुंसां पापत्रयनियामिनी ।
त्रिवर्गसाधिनी धन्या धरण्यां मथुरात्रयी ॥ १५ ॥

मथुरेति त्रिवर्णीयं त्रिलोकीति प्रतीयते ।
त्रैलोक्याश्चर्यमार्याणां गोचरः कथमन्यथा ॥ १६ ॥

साकारापि निराकारकारिणीत्यनुभूयते ।
मथुरायां निगूढैव निराकारस्य नित्यता ॥ १७ ॥

मथुरा मथुरैवेति रसज्ञा प्राह साक्षिणी ।
अद्वितीयं द्वितीयं वा मध्येऽक्षरमुदञ्चतु ॥ १८ ॥

अहो अनुभवरसिकाः केचन भृशमनुभूतप्रभूतमधुरिमाणो मथुरानामनि मध्ये धकारमनुबध्नन्ति । मम तु तत्र स्पृहालवो-

पि न भवति । तथा हि—

मधुरा मधुरैव किं ततो मथुरा कामधुरा हि धीमतः ।
मधुरं खलु कामधेनुजं न हि दुग्धं गुरु कामधेनुतः ॥१९॥

अपि खलु जगति विलक्षणैव विचक्षणानां सूक्ष्मसमीक्षा । किमिह न साक्षात्कुरुते ।

यया ह्यभिमतपदमवगाह्य मथुरानामतो मथुरामेव तुष्टुवुः सुधियः ।

तथा हि—

सन्तु नामानि कामानि किं तैस्त्वां मथुरे स्तुमः ।
आलोकयति या रामपदं तु द्विरुदीरिता ॥ २० ॥

यत्र च—अतिचिक्कणदलिताञ्जनपुञ्जगञ्जनजगदनुरञ्जनमञ्जुलवलदिन्द्रनीलमणिमदभञ्जनदलदिन्दीवरसुन्दरसुकुमाररुचेश्चामीकरचारिमभरवामीभवदम्बरसंवृतशम्बरवैरिसुभगतनोरानन्दकन्दसूनोरपघनमवधाय सौदामनीतललितघनाघनसुहृद्गुणशङ्कया निःशङ्कमङ्कमवनेरागता घनपरम्परेव, अतिपरितुष्टतया विगतार्थपुरुषार्थचतुष्टयं मधुपुरीशरीरभाजेऽमरपुरीतो वितरीतुमवतीर्णा कल्पलतेव, मज्जज्जनकिल्बिषगणमीनमनायासेन विनाशयितुमम्बुजभुवा भवार्णवे सुनिहितातिकरालकालजालमालेव, निरवधिनिरवद्यविद्योतकविद्योतमानमानसरूपमानसमवगाह्यातिगम्भीरमपि मोहमयपयम्भो निरवशेषमापिबतो विवेकानेकशा(१)लूकनिकरनिकामवर्द्धमान-

(१) उत्पलकन्दः ।

काम कमलकुलमामूलमुन्मूलयतोऽतिनिक्षोभलोभग्राहमामर्दयतोऽप्यतिमात्रविगाहमानमदमहोदारभूदारवारमुद्दारयतोऽप्यतिमत्सरतुच्छेतरमत्स्यनिकरमुत्सारयतो भृशमनुरक्तव्यक्तहरिभक्तिसंसक्तकरेणुभिर्कलितशर्म्मनर्म्मकर्म्मोद्दामधर्म्मद्विरदपतेर्विहारमाचरतोऽति चण्डचंक्रमणचतुरचतुःपदबन्धनीव, नन्दिनी सवितुः ।

चण्डांशोर्दण्डपाणिः समजनि स पुनर्दण्डयत्येव चण्डं
रंहः संहाभिधावद्भटमखिलमभूत्तथ्यमित्थं स कालः ।
तज्जातायाश्च तस्य स्वसुरपि सकलं घोरमंहोहरन्त्याः
कालिन्द्याः काममिन्दीवररुचिररुचिर्युज्यते कालिमैव ॥२१॥

भृशं भवतु नन्दिनी दिनमणेस्तमोग्रासिनः
स्वकारणगुणग्रहा त्रिभुवनीतमोग्रासिनी ।
उपाधिबलसाधिनी पुनरसौ तमःपाकजा–
च्छयात्तु वि(१)शदं महो रुचिमहो सुनीलां विना ॥२२॥

अनुरञ्जितकृष्णचञ्चरीकं मथुरामञ्जुलमञ्जुपुण्डरीकम् ।
निजलक्ष्म दधाति मोक्षलक्ष्मीर्यमुनानालविलासिलीलयैव २३

अलमप्रतिपक्षमोक्षलक्ष्म्या मथुराक्ष्मासु विहारमावहन्त्याः ।
वशयत्यचिरेण तां गृहीता यमुनावेणिलतापरिच्युतासौ २४॥

---

(१) कालिन्दीजले विशदरुचिरिति निर्णीतं न्यायसिद्धान्तमुक्तावल्याम्। यथा 'ननु शुक्लरूपत्वमेवेति कुतः कालिन्दीजलादौ नीलिमोपलब्धेरिति चेन्न। नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासम्भवात् । कालिन्दीजले नीलत्वप्रतीतिस्त्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धेः" इति

"वर्णो शुक्लः" ३९ कारिकाव्याख्यायाम्।

परिशीलितमाथुरोपकण्ठा यमुना नीलनिचोलसावगुण्ठा

समुमुक्षुपतिर्विहर्तुकामात्यभिरागा विरराज मुक्तिरामा॥२५॥

सुरकुञ्जरदानवारिलोभाद् भ्रमराली रभसेन बंभ्रमीति ।

कृतझङ्कृति नन्वनीचवीचीचयवाचालकलिन्दनन्दिनीयम्॥२६

मथुरापुरमत्तकुम्भिनोऽमलरम्भातरुभङ्गरङ्गिणः ।

अतिवेलमुदेति दानधारा यमुनाम्भःकपटेन दुर्निवारा ॥२७॥

हरिर्नीलमणिप्रणीतमध्या यमुना नीलगुणेन गाढबद्धा ।

पृथुवक्षस एव मोक्षलक्ष्म्या मथुराभूरनुभूयते विभूषा ॥२८॥

रचयन्नघरोगनिग्रहं दृढयन्नेव च धर्म्मविग्रहम् ।

सकलोपरिसाधयन्गतिं यमुनाकृष्णरसोऽनुभूयते ॥ २९ ॥

साधु रीतिमधिगत्य माथुरीमातुरी भवति सा तु चातुरी ।

कातरीभवदघैणलोचना लोचनाम्बु यमुनां वितेनिरे॥३०॥

केलिमन्दिरमिहारुरुक्षवे मोक्षपक्ष्मलदृशे मुमुक्षवे ।

इन्द्रनीलमणिनाधिरोहणी वेधसाक्रियत भानुनन्दिनी ॥३१॥

कृतकायकदम्बडम्बरा विहरन्त्येव वृषा निरङ्कुशाः ।

कलिचौरभयेन वेधसा यमुनाऽयोमयदाम निर्ममे ॥३२॥

सहेलं येनालं कृतमधुपुरीदुर्गशरणं

गृहीतः कालिन्दीविलसदसिरिन्दीवररुचिः ।

करस्याग्रे मोक्षः फलमपि भविष्यत्यविकलं

किमस्या वै रंहोविकटभटरंहःप्रकटितैः ॥ ३३ ॥

(१)दुरमीव समीरणाशनालसकालाजगरी गरीयसी।

---

( १ ) अमो रोगः ।

कलिभेकभयंकरी बभौ मधुपुर्यां शमनस्वसैव सा ॥३४॥

यस्य क्षणं मधुपुरी क्षणगोचरी स्या
न्मुक्तिस्तु तत्सहचरी विजरीहरीति ।
धात्रेत्यतानि धरणौ यमुनाच्छलेन
द्राघीयसी लिपिरसीममषीरसेन ॥ ३५ ॥

यमुनातनुरुहराजिर्मथुराराजीवनेत्रायाः ।
स्फुटयत्यतनुविलासानिति लोचनगोचरीभूय ॥ ३६ ॥

संभ्राम्यन्भ्रान्तियोगान्मधुरमधुपुरीं प्राप्य पापैर्दुरापां
निस्तापः कृष्णवर्त्मा समजनि तदनु प्राप निर्वाणमेव ॥
निर्वाणात्कृष्णभावानलभत पदवीं स्पष्टयत्यस्य कृष्णा
निर्वाणं कृष्णवर्त्मन्युदयति वलते ।किं पुनः कृष्णतैव ॥३७॥

वेदो वेद न यस्य वर्त्म यमिनां चेतोऽपि नेतः परं
किंचिद्ध्यायीत न प्रयाति तदपि प्रायः प्रयासेन यम् ।
स प्रादुर्भवितेह देहसहितो ध्यात्वेति धाता ददौ
कालिन्दीकपटेन माथुरभुवे दामेदमैन्दीवरम् ॥ ३८ ॥

(१)तालाङ्को मयि मङ्क्ष्यति स्वयमहो देवो हरिर्मङ्क्ष्यति
प्रेमार्द्रा ससखी च मङ्क्ष्यति मुदा राधाप्यसाधारणी ॥
ध्यायन्तीति चिरं निवेद्य च पुरस्तात्तस्य चण्डद्युतेः
कालिन्दी किल मेदुरा मृगमदैरद्यापि विद्योतते ॥ ३९ ॥

हित्वा हन्त हठेन कैटभरिपुः कृत्वा महत्कैतवं
भेजे धाम तदेव नाम स निजं दत्त्वा रुजं भूयसीम् ।

---

( १ ) तालाङ्को बलरामः ।

कालिन्दी किल कालिमानमियता लेभे शुचं बिभ्रती
सार्द्धं खण्डितमण्डलैर्मधुपुरीवामभ्रुवां मण्डलैः ॥ ४० ॥

वैदग्धीरसरङ्गरूपगतिगाश्चातुर्यचर्याकुल-
श्रीमत्कोटिमनोभवे निजभुवं प्राप्ते हठान्माधवे ।
शून्या वीक्ष्य दिशो दशैव सुदृशो वार्युज्ज्वलं प्रोज्झ्हुः
कालिन्दीजलमिन्द्रनीलशकलश्यामं निकामं ततः ॥ ४१ ॥

यत्र च—

रेजुर्द्विजाः क्षतरुजा भृशयायजूका
भूकामपूरणभुवोऽखिलसिद्धिभूकाः ।
ब्रह्मानुचिन्तननिरन्तरजागरूका
मूकायितद्विषदहंकृतवावदूकाः ॥ ४२ ॥

आप्रातःप्रभृतिप्रतिक्षणपुराणेशानपौराणिक-
व्यासङ्गाः कृतमज्जनादिमुरजिद्यागा विरागा गृहे ।
त्रैलोक्यश्रुतिविश्रुतश्रुतिगणालङ्कारझङ्कारतो
मूर्छन्मत्सरमूर्जितश्रि मुखरीकुर्वन्ति सर्वं जगत् ॥ ४३ ॥

ऋगुच्चरणचातुरीचयचमत्कृतैः कुत्रचित्
क्वचिद्यजुरुदीरिभिः क्वचन सामझङ्कारिभिः ॥
अथर्वगुणगर्वितैः क्वचिदपूर्वभूर्वासुरै
रहोमधुपुरीमहो भुवि महोदयं गाहते ॥ ४४ ॥

अविरलतरहोमधूमधोरणीभिरूर्ध्वप्रवाहिनीरिव वाहिनीः सहस्रशोऽजस्रमप्रयत्नेनैव सृजतो निर्म्मितैकनिम्नप्रवाहिनीकस्य मण्डलं चण्डमहसोऽपि मलीमसयन्तो, निरन्तरमियतैव मृगाङ्कश-

ङ्काकुलितचेतसोऽपि द्विजराजस्य मैत्रीमत्यर्थमुत्पादयन्तः, श्रवणमनननिदिध्यासनध्यानधारणासमाधिसाधारणयोगसाधनशमदमनियमसमापितकामक्रोधलोभमोहमदमत्सरा जिह्मेतराचारभृतो ब्रह्माण इव ब्राह्मणा ब्रह्म साक्षात्कुर्वन्ति । तेषां पुनस्त एव प्रतिनवजलवाहपुञ्जसञ्जुष्टविनिविडतमास्तमालभासो दिशो दशापि श्यामाभिरामयन्तो भूर्भुवःस्वःप्रमुखभुवनमूर्धानमनुस्पृशन्तो धूमाः सोमादिधामवासिभिरन्यथैव वर्ण्यन्ते ।

तथाहि—

दुर्वाराभून्महेन्द्रोपलपट्टघटितोद्धाटिताम्भोधरश्री-
र्निःश्रेणिश्रेणिरेषानवरतमुदयद्धोमधूमच्छलेन ।
अर्वागुर्वीसुराणां मधुरमधुपुरीवासभाजाममीषां
जम्भार्यम्भोजयोनिद्युमणिमुखमहीमण्डलारोहणाय ॥४५॥

साङ्कीकृत्याशुपङ्केरुहपतिमकरोत्कोकमस्तोकशोकं
कालिन्दीकृत्य गङ्गां स्वरपि सुरपतिं मन्दचेतीचकार ।
मूढीचक्रेऽलिचक्रं सुरतरुसुमनोमूर्द्धसंमूढवीचिः
श्यामोद्यद्धोमधूमः शिखिनमसुखयत्केवलं पूरिताशः ॥४६॥

अध्वरेण निरघा द्विजवर्य्यास्तन्निषेवणरसादपरेऽपि ।
इत्यनाकलितधाम तमोगाच्छून्य एव मखधूममिषेण॥४७॥

रत्नज्योत्स्नाचयचकितयोः यत्र पुर्य्यां न सूर्य्यो
भेदायालं दिवसनिशयोर्न श्रिया पूर्णचन्द्रः ।
योषित्लीलाललितसरसीमण्डले पद्मिनीनां
निद्रोन्निद्रे नियतमभितः शंसतो व्यक्तमेते ॥ ४८ ॥

बद्धोपान्ताः कनकनिकरैः पद्मरागानुविद्धै-
रिद्धैर्नानामणिभिरधिकोन्नद्धसोपानवीथीः ।
वापीरम्भोरुहवलयिता यत्र हंसाः सवंशाः
संवीक्षन्ते हुतवहधिया सन्निधौ न प्रयान्ति ॥ ४९ ॥

ग्रीवामम्भोरुहदलदृशां वीक्ष्य चारुत्रिरेखा-
मेकावल्या समधिकरुचिं शङ्खकारम्य हीणाः ।
स्वीकुर्वन्ति क्रकचनिकरैश्छेदखेदं च शङ्खाः
को नामोच्चैः परिभवविधिर्जीवने साभिलाषः ॥ ५० ॥

यस्यामिन्दीवरदलदृशामङ्गभामाभिभूत-
ज्योतिर्ज्वालामपि हुतभुजः काञ्चनं साधु मेने ।
अङ्गैराविर्धृतमपि सदा भूषणीकृत्य साधुः
प्राणान्मुञ्चत्यपि परिभवैः श्लाघते गौरवं न ॥ ५१ ॥

अहो—अचिन्तनीयाभिरामरामणीयकसम्पच्छालिनी हि मथुरावनी ।

तथा हि—

मथुरानगरकुरङ्गीनयनाभङ्गी न वाग्विषया ।
कमलापतिमपि कुब्जा यत्र निरब्जालया स्मृतिं चक्रे॥५२॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये प्रथमोयमुल्लासः ॥१॥



## ॥ अथ द्वितीय उल्लासः ॥

गर्वी दर्वीकरपतिरिवाखर्वदुर्वारवीर्यो-
यस्यामुर्वीपतिकुलपतिर्मातुलो माधवस्य ।
भ्रूभङ्गेन त्वरितमजयत्कं स नेति प्रसिद्धे-
रिद्धो नाम्ना जगति कृतिभिर्गीयते यस्तु कंसः ॥ १ ॥

स खलु निखिलमेदिनीपालमालाग्रणीरुग्रनीतिप्रातीनियतशासिताशेषदेशो नरपतिकुलकुहनानुबन्धी बलबहलमदान्धीकृतचेता दुहितृपरिणयादिप्रणयानुबन्धबन्धीकृतजरासन्धो बन्धोरपि सकलसम्पदं सिन्धोरिव कुम्भभूरहह महाप्रचण्डशीलो गण्डूषीकृतवानवार एव, अक्षोभक्षितिधवलक्षपक्षतक्षणकौक्षेयककर्म्मप्रख्यातजम्भारातिकराम्भोरुहदम्भारम्भिदम्भोलिनिष्ठुरसुरमुनिमनुजैकहिंसानैष्ठिकचाणूरमुष्टिकप्रभृतिमहामल्लगोष्ठीगरिष्ठो भूयिष्ठोद्धतबकपूतनाप्रलम्बधेनुकतृणावर्त्तदुर्वृत्ताघदुर्मदद्विविदबलीमुखप्रमुखमहाबलीयोबलवेष्टितोऽविरतमहामदान्धगन्धसिन्धुरप्रकराग्रणीमहामदबलकुवलयापीडदुष्करापीडपुराधिष्ठितो मनसि न मेने कमप्येव ।

चलति सति कदाचिदाखेटकखेलाय सखेलकण्ठीरवलीलगमनशीले यस्मिन्नतिगरिमातिरोहितगभीराम्भोधिभीमध्वनिभरगभीरभेरीभयङ्करभाङ्कारदुन्दुभिनिवहदुन्दुङ्कारप्रचण्डतरढक्काढंकारपटुचण्डिमडिण्डिमाडम्बरप्रकरकटुझर्झरझल्लकाझङ्कारप्रकटतराहङ्कारभटहुङ्कारगर्भगुरुचापटङ्कारघटोद्घाटिताखण्डब्रह्माण्डाभित्तिप-

रिणाहम्, प्रचलितमलयहिमालयमेरुकैलासमन्दरविन्ध्यसह्यदर्दुर-प्रभृतिपूर्वापरदक्षिणोत्तरधरणिधरादिग्गिन्तरदन्तावलप्रकरप्रल-यघनघटायमानस्फुटकटुकरटीन्द्रकोटिक्रमठकठोरकुम्भकूटकोटिप्र-कटितमदजलंवाहिनीपूरितावनीवलयम्, अविरलहयनिवहसावहे-लहेषाव्यतिकरसाटोपचापटङ्कारभारमुखरितादिगाभोगनभोभर-भूगोलगोलोकमुखास्तोकलोकचक्रम्, गिरिगुरुगजराजराजिव्रज-व्रजदातिविततरथौघदुर्वहानोगणस्फुटपरिपुष्टदुष्पीवरोष्ट्रकुलभू-यिष्ठोद्भटभटविकटतरोत्कटभूरिभारभुग्नभिन्नदानमदुर्वादुर्वहदुर्वार-भरव्यग्रीकृतदर्वीकरपतिगरिमविखर्वीकृतगर्वतया कूर्म्मकुलसार्व-भौमो भयचकितनिमीलितनयनो गोपायितुमिव निजवपुरन्तर्दधे स्वमूर्द्धानम् ।

द्वीपानद्रीन्समुद्रान्द्रुमपमनुजनदीदिग्गजान्बिभ्रदेकं
भूचक्रं चक्रिराजस्तदपि तमसकौ कूर्म्मभूसार्वभौमः ।
कंसे विश्वावतंसे प्रचलति चलति द्राक्कियच्चित्रमेतद्
यस्माद्विश्वम्भरोभूत्फणिपतिशयने सोऽपि निद्रादरिद्रः ॥२॥

यस्य कृते खलु दिशि दिशि द्वीपे द्वीपे पुरि पुरि गेहे गेहे पथि पथि द्वारे द्वारे नरि नरि चिन्ता सन्तापकारिणी ववृधे ।

किमपरमहो प्रातःपूर्वाण्हमध्यान्हपराण्हसंध्यायामिनीष्व-पि वर्णानामकर्णाकर्णिकमेकक्षणोऽपि न ययौ । न हि खलु केव-लमुनिमनुजगणानां मनोऽनुतापदीपदीपनाय स्नेह इवासीदपि-तु सुराणामपि सुराणां भूसार्वभौमस्य ।

तथा हि—

स्वयम्भाराातिप्रभृतिसुरसम्भारगमना–
गमारम्भैरम्भोनिधिरयमसम्भूतविरतिः ।
न तेषामास्येषु स्तुतिविरतिरासीत्क्षणमहो
समीपे शेषाङ्कोपरिशयितपङ्केरुहदृशः ॥ ३ ॥

किम(१)परं यस्य कृतेऽतिबहलवर्द्धमानमुग्धदुग्धवीचीनिचयानीचीकृतसमीचीनाप्राचीनप्रचुरतरान्तरोदञ्चदतिमन्द्रसान्द्रमधुरध्वनिघोरणीमधुरिपुधामनीह दुग्धनीरधौ कुसुमसुकुमारचामरग्राहिणीनां मृदुकरकोमलकमलाविचालितचारुचामरोच्चयमसृणसमीरणसेवितोऽपि वदनविजितेन्दुसिन्धुनन्दिनीकराम्बुजसंवाह्यमानचरणाम्बुजोऽपि मलयजविस्तरकस्तूरिकानिकरनिवेशचारुवेषसुललितमालतीनिर्विशेषनिःशेषसुरभीकृतशेषभोगपर्यङ्कनिःशङ्कशयितोऽपि स्तुतिमुखराननचतुराननपाकशासनशमनहुताशनप्रभृतिगीर्वाणगीर्वाहिनीबहलकोलाहलकौशलादचिरेणैव जातजागरो दरकुञ्चितवक्रीकृतलोचनाञ्चलवक्रीकृतमन्दोन्नतभ्रूलतम्, मणिमयकुण्डलमण्डलपरिपीडितांसफलकम् , अलककुलाकुलालिकम् , आमोटितमृदुलकलेवरम् , अतिशिथिलीकृतवचनमनोहरलघुलघुजृम्भारम्भसम्भासितार्धवदनाम्भोजमधुरम् , आलोकयन्नभितः सविस्मय इव नारायणः समुत्तस्थौ । त-

---

( १ ) कृष्णावतारोपक्रमकथा भा० १० स्कं १–२ अध्याययोर्वर्त्तते ।

चनमवकलय्य च देवतानामजानन्निव ससंभ्रमभ्रमितभ्रूविभ्रममाधूनयामास मूर्द्धानम्, प्रतीकारोपायमपि सहायान्तरमपि चिन्तयामास माधवः श्रीमान् । समुचितमेव सहायान्तरचिन्तनं महतोऽपि ।

तथा हि—

अधिगच्छतु को लक्ष्यं गुणप्रौढोऽपि सायकः ।
सहायः स्यान्नचेदेको धनुर्द्धरधुरन्धरः ॥ ४ ॥

अगणितदिनयामिनीकनारायणसेवापरायणः प्रल्हाद इव, अनुगतपरिपालनैकनिष्ठो युधिष्ठिर इव, प्रतिनियतमजातप्रतिज्ञाभङ्गो गाङ्गेय इव, निरवधिसमधिकसावधानतया पितुरनुशासनैकसेवने निपुणो राम इवाविरतपरमार्थभावभागी, विभाण्डककुलमण्डनो भगवानृष्यशृङ्ग इवानवरतमवार्यधैर्यशीलो, जलधिरिव गाम्भीर्य्यवितरणशौर्य्यप्राचुर्य्यैकपदम्, अचल इव जगदुपरिमहास्थैर्यैकसाम्राज्यभूः, कर्ण इव जगदाश्चर्य्यौदार्य्यैकनिधिः, दधीचिरिव प्रतिनियतमपर्याप्तमर्यादैककन्दो, हरिश्चन्द्र इवातिथिजनप्रतिपालनैकतत्परः, स्वतनुजमधुसूदनप्रतिमो यदुवंशकेसरी जगदवतंसो नियतमदूरमहानुभावमहनीयशूरसेनान्महाजलधेरिव कल्पमहीरुहो हृदि संवासितवासुदेव-[ चरण ] द्वयी धर्म्मवत्तया वसुदेवो नाम तत्र प्रादुरासीत् ।

स खलु सकलानुरञ्जनैकशीलसीमा परमवशीकृतानिखिलमनीषी परिणतरमणीयशीतकिरण इव निजकुलकुमुदानि मोदयन् शुशुभे ।

गुणगरिममहिमनिकामधामतया निरवद्यशुद्धकुलीनतया परमविचारचातुरीधुरीणो धरणिपतिरुग्रसेनः सबहुमानपुरःसरं दुहितरं नाम देवकीमदात्तस्मै । स खलु तया गुणनिकरनिधानया विहिताखिलभक्तिकविधानया निखिलप्रकृतिगणसमुचितशुश्रूषणसावधानयाऽप्रतिरूपरूपस्तूपया त्रिभुवनकमनीयसुकोमलशीलया तुलितनिःसीमकलाकौशलया, महावैदिकमन्त्रोपनीतहविराहुत्येव हुताशनः, सुविततसुकृतकृतार्थीकृताखिलकार्त्तिकराकयेव नायको निशायाः, शरदुपचितप्रभातवेलयेव पद्मिनीरमणः, सुवितगुणयोषया निर्दोषया कवितयेव सारस्वतप्रपञ्चः, कञ्चनकान्तिकलापमवाप ।

कंसः पुनरनुरागभागपि तयोरुपायनीकृततपनीयोपकरणरमणीयपरभागनागतुरगरथयानवाहिनीगणबहुगुणभासमानसमानाभरणविलासीभवदसीमदासीदासराशिरपि स्वविनाशिभगिनेयभाविनीत्यकस्मादाकाशवाणीप्रणीतकर्णज्वरनीतितया विमनीभूय भृशमभिद्रूयमानो भगिनी हननीयेति निर्णीय दुर्निवारो वारंवारं महोद्यमं व्यतानीत् ।

अथ कथमपि बुद्धिकौशलबहुविधसामाचरणतया भाविनोऽर्थस्यावश्यम्भावितयोत्पत्तिसमसमयसमस्तापत्यार्पणैकनियमतया च मदकलदन्तावलदन्तादिव पद्मिनीम् , ज्वलदनलशिखान्तरालसम्भृतामिव हव्याहुतिम् , सुचिरस्वपोषितकण्ठीरवकण्ठादिव बालमृगीम् , कुपितकृतान्ताननगह्वरादिव निर्भरजनितधैर्यध्वंसादपि कंसाद्वसुदेवो देवकीमावर्त्तयामास ।

अथ समयक्रमेण यथा स्वीकारमर्पयामास षडेव शावकान्देवकीदयितः ।

अहो त्रिजगदगोचरैव देवकीमाया, यदनायासेन देवकीगर्भात् सप्तमगर्भाविर्भूतभूधात्रीधरणधुरन्धराचिन्त्यानन्तमहिमानन्तोऽनन्तसीमन्तिनीसीमन्तमणिरमणीयतातिरोहिनीरोहिणीकरोहिणीरमणसुखरोहिणीगर्भमध्युदास ।

अकस्मादेवंविधविबुधविधानके काले सति सपदि निर्भरनिर्भ्रान्तप्रतीतयो 'देवकीगर्भो निपतित' इति निरूचिरे पौराः । समुदितबुद्धिभ्रंशेन कंसेनापि तथा प्रतीतम् ।

अथसुरनिकरनिकामकामनापूरणाय धनजनयौवनभौवनाधिपत्यापत्यप्रसहवर्द्धमानकरितुरगादिकयानपानप्रचुरीकृताभिमानदानवानवरतमदमेदुरमेदास्विमोदिनीखरात्रिसरस्वरूपमुर्वीदुर्वहभूमिभारमपनेतुकामो निरपेक्षितशर्म्मनर्म्मापरधर्मकर्मनिर्मितात्मपदपद्मपारिचर्ययोर्देवकीवसुदेवयोरभिमतसुतत्वासनावसानमानिनीपुरात्मनोऽपि भक्तैकमात्रवश्यम्भावं प्रकाशयन्नपि निजचरणारविंदमस्पन्दमानमकरन्दमन्दिरीकृतमानसमौलिन्दयोर्यशोदानन्दयोरतिशयमानन्दवृन्दमतितुन्दिलीभावयितुमपि सुन्दराभीरकुलेन्दीवरलोचनाहृदयगन्धगजेन्द्रबन्दीकरणकौतुकी देवकीजठरपिठरीनिवासमेवोररीचक्रे चिरं चक्री ।

तस्मिन्पुनरन्तराविर्भावित्रिभावातिरोभाविनि शरदभिनवरविगर्भदुर्वहदुर्वारद्युतिभरवारितान्धकारपरम्परा पौरुहूती हरिदिव हरिदेवतोद्दिदीपे ।

अपि च यशोदा यशोदानदाक्षिण्यशोभिनी दुर्घटनैकपटी-यस्यां तस्यां जठरपिठरीमासेदुष्यामभिबोधितसकलसमृद्धिसिद्धि-बहुविधशुद्धिपरमब्रह्माजिह्मप्रकाशगर्भोपनिषदिव गोकुलधामा-भिरामयन्ती जगदुपरि कयापि शोभयोज्ज्वाल नभसि ।

घनघनाघनान्धकारे नभसि निशार्द्धवृषार्द्धभाजि चन्द्रे ।
समजनि यदुसिन्धुरोहिणीशोऽष्टमतिथिबन्धुररोहिणीविहारे ॥५॥

जगदिदमखिलमनेहीकृत्य दैत्यसङ्घसंहाररंहोजुषि स्फुरद-म्भोधरदम्भावसारणारम्भिशोभासम्भारिवपुषि परमतेजसि दि-शि दिशि के के त्रिदशा न तेनिरे कुसुमवर्षणानि हर्षातिशयेन ।

पुरुहूतहुतवहयमयामिनीचरचक्रवर्त्तिवरुणसमीरणधनदधू-र्जटीनां धामधोरणीषु दुन्दुभीनां जम्भारिमुक्तजलधरगम्भीरज-लनिधिसंभूतघनरवगर्वचर्विणो जर्जरितवैरिनारीमर्माणः समुज्ज-जृम्भिरे नादाः ।

जम्भारिर्न्दुन्दुभीनां ध्वनिभिरमुखरीकृत्य नासीज्जगद्द्राक्
नाजाग्रद्रौमरुद्रो विधिरपि सहसा नाचमत्कारमूढः ॥
नावर्षत् पुष्पवर्षं दिशि दिशि समुनिर्देवतर्षिर्महर्षि
र्लक्ष्मीशे वैरिलक्ष्मीमभिसरति पुरे माथुरे कौतुकेन ॥ ६ ॥

तस्मिन्नाविर्भवति मथुरायां मथुरामेव के न महात्मानो बहु प्रशशंसुः ।

तथाहि—

आः पुण्यं मथुरापुरस्य परमब्रह्मापि कर्म्माचरद्—
यत्राहो निजजन्म साधु मनुते पित्रोः समुद्धारतः ।

केचन पुनरद्यापि तमेवार्थं युक्त्या समर्थयन्ते—

आत्मानं विततार चारु मथुरोत्तंसस्तु कंसः कथं
तन्नो चेत्पुरुषोत्तमाय बहुधा दोषान्विचिन्वन्नपि ॥ ७ ॥

महोद्यमेन निरवद्यवाद्यघोषमिव, मृदुमधुरसान्द्रमन्द्रघोषं वितेनिरे, परितोऽतिपरिपुष्टवारिवृष्टिं मुक्तावृष्टिमिव भृशमारभिरे, जगति हरिजन्ममहामहोत्सवेन कौतुकतरलाः सौदामिनीं नाम नर्तकीमानर्त्तयामासुराशु, रसमेदुराः पयोधरपरम्पराः ।

अथोद्भटकिरणजटालहाटकघटितमणिपट्टुतुलाकोटिपादक-टक-कटिमेखलोत्कटकान्तकङ्कणकेयूरग्रैवेयकश्रीवत्सकौस्तुभ-महाहेमहारहसितहीरहारिकुण्डलकिरीटकोटीरकोटिमणिमण्डने ना-साशिखरविलम्बिविकस्वरसुवर्त्तुलपृथुलमुक्ताफलधवलमयूखमां-सलकपोलतले करकमलालङ्कृतकमलकम्बुकौमोदकीचक्रे च-क्रिणि लोचनपथमण्डिनि पुण्डरीकलोचने यदुकुलकमलविरो-चिविरोचनागौरवासमि नाभीस्थितस्तुतिमुखरितब्रह्मणि परम-ब्रह्मणि हृदयानन्दिनि नन्दनीभाविनि तदङ्गाम्बुवाहच्छविधा-रोपलम्भनमोद्भिन्नकलमाङ्कुरनिकरेणेव विपुलपुलकोत्करेण क-लितकलेवरकेदारौ वहदानन्दनयनजलमन्दाकिनीमेदुरौ बहुकृ-ताकैतवसुदेवदेवकीवसुदेवौ न हि केषां केषां फलानां भाजनीभवतः ।

अथ सम्भ्रमचकितविलोचनो दण्डवद्भुवि निपत्य वसुदे-वो देवकी च स्तोतुमारेभे—

जय जय जगन्नाथ यदुवंशोत्तंस हंसवास हंसासन-

नुतचरण परमहंसमानसकेलिकलहंस मणिमयावतंसप्रभामांस-
लकपोलांस संसारापारपारावारोत्तरणकर्णधार धरणितलो-
त्तारधुरन्धरावतार प्रतिनवधाराधरजलधारायितमणिहारावलि-
घनताराङ्कितघनसाराञ्चितसमुदारोरःस्थलसुरासुरकुलभाराकुल-
जगदाराधितपद नारायण नयपारायणमय धीरावलिभववारां-
निधिसुखपारासादन पारातीतक्षीराम्भोनिधिगम्भीराशय वि-
हितविहार श्रुतिकुलसारक्षपितानिकार ब्रह्माकार प्रशमि-
तपृथ्वीपृथुतरभारप्रकटितनिरुपाधिजगदुपकार स्फारविलोच-
न विगतिविमोचन दानवकैरवकुलसङ्कोचन मुनिगणमा-
नसकमलविरोचन या[स्वी]कृततिलकमनोहर नीलपयो-
धरपुञ्जसहोदरमञ्जुमहोभर विबुधपुरन्दर इन्दीवरमालासु-
न्दर मन्दारावलिवलयितकन्धर बन्धुरबन्धूकाधरसुमधुर वन्दन-
विनमद्वृन्दारकपतिवृन्दप्रशिथिलकुन्तलबन्धभ्रमदिन्दिरमन्दिरचर-
णस्फुरदरविन्दद्युतिमकरन्दस्कन्धास्कन्दितसुजन द्वन्द्व(१)ब्र-
ह्मानन्द सुरद्रुमकन्द स्मितसुमकरन्दस्नपितामन्दमुखेन्दो जय जय
जगदानन्द व्याससनन्दसनातनसनकब्रह्ममहेशपुरोगमसुरनरकि-
न्नरनिषेवितपीठद्वय देव जय शमय ममाधिं निधिमिव दर्शय भ-
क्तिलवं तव दीनदयामय कृपणकृपालय सदयो भव मयि वि-
नयविहीने ।

देवकी प्राह—

मुरमर्दन विष्णो त्रिभुवनजिष्णो परमसहिष्णो वृष्णिपते ।

---

(१) द्वन्द्वं रहस्यम् ।

त्वं करमाली त्वं वनमाली त्वं भयदाली विश्वगते ॥
तव चरणं देवा दधति न के वा चेतसि सेवानिपुणतराः ।
स्फुटमित्थमहं का विगतातङ्का नियतमनङ्का बभुरमराः ॥ ८ ॥
असि मीनाकारो जलधिविहारो वेदोद्धारोल्लसितमते ।
दामोदर सामस्तुतपद कामप्रद हतवाम श्रीवसते ॥
कमठीकृतकायो विघटितमायो विहितभावायो(१) वहसि भुवं
परिपालय कृपया त्रुटितत्रपया भवभयमपयापयसि शिवम्॥९॥
भीमार्णवलीनामतिशयदीनां महिमविहीनां वीक्ष्य धरां
कोलाकृतिधारी सलिलविहारी तामुदधारीरतिविधुराम् ।
आरोहितदन्तामतनुमनन्तां दधदपि हन्तासुरमवधीः ॥
अवधीरितशक्रं दारुणवक्रं गज इव नक्रं सकुतुकधीः॥१०॥
नरकेसरिरूपी नखरस्तूपी दानवभूपीभवदसुरं
हतवानसि जम्भाद्विषदुरुदम्भप्रचुरारम्भभ्रंशपरम् ॥
वज्राधिकमुखरैर्भीषणनखरैरास्थिषु मुखरैर्दैत्यतनो-
रुद्गलिभिरुदितै रविकरविदितैः शोणितमृदितैर्मोक्षम(२)नो ॥११॥
बलिनामनहेतोः खगपतिकेतो तरलितचेतोऽमरसुखभूः ।
वामनवपुरासीरखिलग्रासी करपदभासी हुतमुदभूः ॥
तापत्रयनोद च्छन्नविनोद प्रकटितमोद त्रिभुवनकं ।
मनुते शुभवंतं शमितभवं तं को न भवन्तं ननु जनकम्॥१२॥
सुखभूयिष्ठारं कलितकुठारं दनुजहठारं विश्वधरं

---

(१) अयः शुभावहो विधिः ।
(२) मनुर्मन्त्रः ।

परिपूरितकामं त्वामभिरामं कथयति रामं को न परम् ।
क्षितिभारभ्रंशी भवशुभशंसी क्षत्रध्वंसी पुनरुद्भूः
करुणारसवाही सदनुग्राही पातकदाही द्विजकुलभूः ॥१३॥
हरकार्मुकखण्डी कौणपदण्डी रविकुलमण्डी दशरथतः
कृतदेहारम्भः पृथुलस्तम्भक्रमभुजजम्भद्विषदुरुतः ।
रावणहतिहेतोरुदधौ सेतोरन्तककेतोरिव विजयं
हेलाहतवाली व्यतनोरालीकृतगुरुतालीवनविलयम् ॥१४॥
गुरुकरुणावन्तं भुवनभवं तं वदति भवन्तं शुद्धमिति
प्रथिताभयदानं परमज्ञानं मोक्षनिदानं शुद्धमतिः ।
अखिलं न सदालोकयितुमिवालोडितमिति कालोपचितभटै
स्त्वामवतीर्णं स्मरति विशीर्णं मायाजीर्णं हृद्विकटैः ॥१५॥
म्लेच्छाहिततापं खण्डितपापं मशरं चापं दधति रमे
त्वयि कल्किनि वेदागोचर भेदाविष्कृतखेदानपनय मे ।
इह को महिमानं वदतु च मानं किमपि समानं जगति न ते
मुनिरतनोद्ध्यानं सुदृढज्ञानं तव संस्थानं न हि लभते ॥१६॥
त्वं पारे वचसो बहिश्च मनसस्त्वं निष्कलो निर्गुण-
स्त्वं पूर्णस्त्वमहो नभोवदखिलव्यापी न लिप्तः क्वचित् ।
अभ्यर्णप्रकृति प्रसन्नमुकुरव्यालम्बि बिम्बं तु ते
जीवं केऽपि जगुर्नमोस्तु भवते त्वं योऽसि सोऽसि प्रभो॥१७॥
नान्तो नादिर्न मध्यो न च करचरणं नाननं नापि चक्षु-
र्न श्रोत्रं नापि नासा न च तव रसना त्वक्च नो वा न चेतः ॥
सर्वात्मन्सर्वगस्त्वं जगदपि कुरुषे पासि चात्सीक्षसे च

श्रोता घ्राताऽसि सर्वं रसमुपलभसे संस्पृशस्येव वेत्सि ॥१८॥
जन्म मे सकलशर्मभाजनं भाजने त्वयि दृशोरजायत ।
शृङ्खलापि पदयोरनाकुला मुक्तिमापमहमापदां बहिः ॥१९॥
एकदोदयति मोदवाहिनी वाहिनीव हृदि भोजभूपतेः ।
दर्शने तव तपोनिदर्शने कौतुकं भवति भीरपि प्रभो ॥२०॥

प्रभुवर परमेश निवेदयामि ते पदयो "गोपय गोपयालौकिकं रूपं" इति वचनमवधाय देवक्याः स्मितमधुरमुखेन्दुदन्तदीधितिनिकरनिवारितान्धाकारपरम्परपरमपुरुषो मधुपीयूषमाधुरीमयमाह मातरं पितरं च किमपि प्राचीनम् ।

पूर्वेषु बहुषु जन्मसु भवद्भ्यामद्भुतमिदमेव मे रूपं मनसि निरूपयय मय्यवसितपुत्रभावाभ्यां भूयोऽयेवार्जि दुर्जयं सुतपो दीर्घमिति पुनरहमृणमार्जनाय पर्जन्यपर्याकुलीकरणमभिहर्षितमहर्षिदेवर्षिमानसमदर्शयमात्मनोरूपम् । तदिदानीमपनीयतामात्मीयतातापत्रयशङ्का । परन्तु ममैव माया भगवती जगतीसर्वनिर्वाहसामग्री समग्रैरभिपूजिता नन्ददयितायां गोकुले यशोदायां जनितामिहानयतु, मां नयतु तदङ्कमशङ्कमना विनाविलम्बमम्ब ? जनकोऽयम् । अहमपि भवतोराज्ञामेव पालयन्नात्मानं गोपयामीदमभिधाय तद्रूपमपहाय माधवः साधारण इव शैशवं भेजे ।

तदनु वसुदेवोऽपि तनुजीभूतवासुदेववचनमवधाय तमादायागणितघनघोरगर्जदुर्जयान्धकारनिविडतरासारसौदामिनीस्फुरदशनिचमत्कारदुर्वारोद्वेल्लदुल्लोलकोलाहलबहलवाहिनीविलङ्घ-

नादि तथैव संविधातुमारेभे ।

अथ चलति सुतमशङ्कमङ्के निधाय वसुदेवे समजनि विघटितनिगडबन्धयन्त्रणश्चरणो, द्रुतगलदर्गलकपाटकूटानि नगरद्वाराणि, मरुदपि विरताखण्डचण्डिमारम्भो, द्रुतमम्बरमप्यपगतगम्भीरतराडम्बरदम्भोलिपरम्परम् , परितः समुदयदवार्यपर्जन्यगणोऽपि रचितामन्दजलबिन्दुवृष्टिसृष्टिर्दुर्जनानेव तर्जयन्निव गर्जन्नासीत् । दर्वीकरपतिरपि दुर्वारदर्वीदर्शितातपत्रमनुसेवते स्म वसुदेवम् ।

अथ विगततरानीचवीचीवाचालीकृतदिङ्मण्डलीकतया दुरितचमूरिव तर्जयन्ती, जगति जनार्दनजन्ममहामहोत्सवमिव विख्यापयन्ती हरिसम्भवसम्भूतसम्मोदमेदुरा बहललहरीबाहुमास्फोट्य नाट्यमिवाचरन्ती, 'व्रजभुवन सम्प्रयाणमङ्गलाधानदुन्दुभिध्वानानि च कुर्वती, सर्वतो निर्भरोद्भ्रान्तावर्त्तसन्तानशालिनी स्फुटगम्भीरनीरनीलिमाकुलतया कुटिलमनोवृत्तिरिव, भीषणापि, दीनजनधनमनोराज्यपरम्परेव दुष्पारापि, शमनसहोदरा जानुदघ्नजलेव सावहेलमुदलङ्घि वसुदेवेन ।

साङ्केतिकं यदभिधानमजामिलोऽपी
वक्त्रे निधाय भवसागरमुत्ततार ।
अङ्के तमेव वसुदेवकृती दधानो
भानोः सुतामतरदित्यपि किं विचित्रम् ॥ २१ ॥

वसुवदसुवदङ्के नन्दपङ्केरुहाक्ष्या–
स्तमुरसि वसुदेवो वासुदेवं निधाय ।

तदुदरभुवमाद्यामादधन्मोघमाद्य-
न्मति पुरमनुलेभे प्राप्ततद्वाक्प्रतीतिः ॥ २२ ॥

रूपं गोपय गोपयेति पितरौ प्रागेव यत्प्रोचतु-
स्तामाज्ञामतिगौरवादिव तयोराधाय मूर्ध्नि द्रुतम् ।
तादृग्भीमतमस्विनीमगणयन्मेघान्नदीलङ्घनं
रूपं गोपयितुं जगाम भगवान् गोपाकुलं गोकुलम् ॥२३॥

अथ वसुदेवे दैवके क्रोडे कुमारीमर्पयत्येव कंसदैत्यानुचारिणस्तदनुसन्धानकारिणः किमजानि किमजनीति व्याहरन्तो दूराद् दुरात्मानः परिवव्रिरेन्तःपुरं परितः । द्रुतमवधीर्य धैर्यैकमहोदधिं वसुदेवं कुररीमिव विक्रोशन्तीमहह तीव्रबाधया देवकीमपि नवशावकीं तामवरुन्धानामनामादरेण तामपवार्य तर्जनगर्ज्जजर्जरितदिग्दिगन्तरास्तस्याः क्रोडात्क्रीडन्त इव तामादाय श्येना इव कपोतिकापोतीम् , शार्दूला इव सुरभिकिशोरीम्, पारीन्द्रा इव दम्भादिर्भीकलभीम्, व्याधा इव मृगबालिकाम्, कामान्धा इव मतिधैर्यसम्पदं व्याधूयेव सुकुमारतनुकान्तिम् , झंझा इव वल्लरीशोभाम् , निदाघवासरा इव कोकिलाकाकलीम् , अवग्रहा इव कादम्बिनीजलधाराम् कीनाशकिङ्करा इव पाञ्चभौतिकाकृतेर्जीवात्मनो मूर्त्तिम् , हेमन्तदिवसा इव सरोजिनीलक्ष्मीम् , अक्षीणबलशालिनो निर्ययुस्त्वरितं त्वरितगतिविजृम्भमाणनिःश्वासपरम्पराः श्रमजलमेदुरमेदस्विवर्ष्माणो जलधरजलधोरणीपिच्छिले पथि प्रस्खलन्तोऽपि कृतकृत्या इव धा-

वन्तो भोजे(१)न्द्रकराम्भोजेषु कुमारीमिव केवलं कुमारीमारोपयामासुः ।

स पुनरविचारितपूर्वापरः पामरो भगिन्या इति भागिनेयीमिति स्त्रियमिति बालिकामित्यविचिन्तयन्नेव मर्यादामतिवर्त्तमानो जीवैकलोलुपः शिलायां पातयितुमारेभे ।

दिशि दिशि जलदा रुदन्त इव नर्दन्तो मुमुचुरजस्रमस्रूणीवाम्बुपूराणि ।

तदनुतापमसहमाना इव सौदामन्योऽपि जज्वलुस्तरलाः । करुणार्द्रा इव भित्तयो निपेतुस्तत्क्षणबहलझंझानिलव्याजात् । प्राणानिव दिग्वामलोचना मुमुचुरक्षेमं तदुदीक्षितुमिवाक्षमाः । क्षमारुहैः सह गृहा आत्मन एवोररीचक्रिरे भङ्गम् । अतिचण्डमानपवमानजवनिवहनिपात्यमानधरणीतलधूयमानपङ्कपूरपरिपूर्यमाणपुरुभवनमूर्द्धबद्धध्वजपटकपटेन कीर्त्तयो निपत्य मलीमसायन्ते स्म ।

पौराः केचन दुर्मनीभूय भेजिरे दूरम्, केचन चोलाञ्चलेनाननमाच्छाद्य रुरुदुरेव दीर्घकालम् । काश्चन पौराङ्गनाः पुनरात्मनो रसनाग्रं दशनाग्रेण सन्दश्य पाणिभिरुत्ताडयामासुरुरांसि । काश्चन जनितविलापाः कुलपांशुलः कुलपांशुलोऽयमिति निनिन्दुरेव निभृतेऽवसदवतंसस्य कंसस्य निजवंशस्यापि । किमपि कर्त्तुं व्याहर्त्तुमप्यशक्नुवाना उग्रसेनादयोऽपि सनिःश्वासमभिदधुर्मुहुरपि हाहेति । द्रुतमुपचीयमाननिर्वापितप्रदीपपरम्प-

---

( १ ) भोजेन्द्रः कंसः ।

राज्याजेन राजेतजांसीव सर्वतः प्रशान्तानि । अतिसंरम्भाकुल-जम्भारातिप्रमुखगीर्वाणैः क्षिप्तास्तप्तायः पिण्डा इव दम्भोलयो ददृशिरे लोकैः । अनुचितमेतादृशानुचितकर्मावलोकनमिति भु-वि दिवि चान्तर्दधिरे नक्षत्रमण्डलानि निबिडघनचयोपचीयमान-तिमिरमिषेण । दिशः पुपूरिरे दुर्यशोभिरसुरराजस्य । असदव-लोकनवर्धमानास्तोकशोकैरिव कोकैः करुणमुदीरितं पुरदीर्घि-कासु । करिवरकरपुष्करादिव पुष्करिणीसमीरणोपमीयमाना भुज गपतिभोगपीवराद् भोजभूपतेर्भीमभुजदण्डाग्रतो मनुजकिशोरी कपटपटीयसी राजश्रीरिव नभसि रंहसोत्पतन्ती त्रिभुवनभवन-विभाविनी भवभाविनी व्यलोकि राजलोकेन ।

अथ तस्याः पदकमलनाभिकमलकरकमलाननकमलायत-दृक्कमलस्रक्कमलादिसमुल्लासैरम्बरतलमखिलमलोकत कमलम-यं सकलराजलोकः ।

व्योम्नि स्यन्दनचारिणी चरणयोः शिञ्जानमञ्जीरिणी
मध्ये मेखलिनी करे वलयिनी बाहौ च केयूरिणी ।
ग्रीवायां मणिहारिणी श्रवणयोरत्नोत्तमोत्तंसिनी
चार्वङ्गेऽरुणचोलिनी मुकुटिनी मौलौ भवानी बभौ ॥२४॥

ध्यायद्धीरमनस्विनी पदतले चन्द्रानने हासिनी
हस्ताग्रेषु महास्त्रिणी त्रिगुणिनी नेत्रोत्पलेषु त्रिषु ।
सर्वाङ्गेऽसितरूपिणी हृदि पुनर्वैशद्यसम्भारिणी
कंसध्वंसनशंसिनीशगृहिणी कैर्नैक्षि नैकक्षणम् ॥ २५ ॥

निर्यातेऽपि पयोधरे घनमयं व्योम त्विषा कुर्वती

विश्रान्तास्वपि चञ्चलासु सतडिद्भासा विभूषावलेः ।
एकेन्दोर्विरहेऽपि पूर्णविधुना वक्त्रेण विद्योतिता
नैरन्तर्येऽपि निरन्तरं दिविषदां वृन्दैर्बभौ पार्वती ॥ २६ ॥
नमज्जम्भारातिस्तुतिमुखरिताम्भोरुहजनुः-
पतन्मूर्द्धाबद्धाञ्जलिहुतवहाम्भःपतितनु ।
घृताचीसध्रीचीगणकृतसमीचीननटनं
बभौ व्योम स्वर्गादधिकमपि दुर्गाहितपदम् ॥ २७ ॥

किमपरमाहो महीलोकेऽतस्त्रयोदशलोकवासिभिरेव कामचारिभिरासिषेवे नभःप्रतोली । भूलोकैरपि निजरूपाणि तेषामेव रथदर्पणार्पणानि सभूचक्राण्यदृश्यन्तेति चतुर्दशभुवनमयमभूदेव तत्क्षणं व्योम । तदिदं चरणरजसोपपादितकोटिकोटिब्रह्माण्डघटनायानापूर्वं मन्यते मुनिभिः ।

धनेशः कीनाशो नयनपथलेशोदयकृते
कृतप्रादक्षिण्यं पदयुगदिदृक्षाकुलमती ।
परिभ्रामं भ्रामं गमितबहुयामं व्यचरतां
न लेभाते भाते नभसि पुरजाते न तदपि ॥ २८ ॥
सरक्षोयक्षोडुग्रहनिवहगन्धर्वपरिष-
त्स्वयम्भूजम्भारिप्रणुतचरणाम्भोरुहयुगाम् ।
स तां दृष्ट्वा कंसो विगलदवतंसश्रुति मुहु-
र्धुनानो मूर्द्धानं मनसि गणयामास विपदम् ॥२९॥

अथ भयमवधाय भोजभूपतेर्भगवती भ्रूभङ्गस्फुरदखिलसृष्टिस्थितिप्रलयकेलिरट्टाट्टहासमुखरिताकाशादिङ्मुखाक्लिरभाष-

त सोपहासम् ।

मा भैषीः कंस नासि त्वमिह स महिषो नो निशुम्भो न शुम्भो
नो वा त्वं रक्तबीजो रणभुवि विजयी नापि चण्डो न मुण्डः॥
उद्दण्डो युद्धशौण्डः पुनरपि भविता कोऽपि शुम्भो निशुम्भः
संभूतिर्मे तदर्था व्रज(१)भुवि समभूत्तेऽभ्रकालः स कालः ॥३०॥

अथ सगणहंसहंसवाहनपुरुहूतहव्यवाहनकालकौणपकुलपालवरुणगन्धवाहनधनदमहेशानैरपि रथमण्डलमण्डनीकृतमणिमुकुरकोटिबिम्बस्वप्रतिबिम्बकोटिकपटकलितकलेवरकदम्बैरनुगम्यमाना ससध्रीचीगणघृताचीरम्भोर्वशीवशीकृतनिखिलतिलोत्तमामदनमदालसमदालसादिसुरवारसीमन्तिनीवारदर्शितपरमहर्षितमहर्षिदेवदानवयक्षरक्षोमानवप्रतिनवनृत्यकृत्यकौशलारम्भा, अथ गणताड्यमानपटुपटहकोटिडमरुडिण्डिमभूरिभेरीगभीरदुन्दुभिबहुलझल्लकीनिकरझर्झरमुरजवेणुमर्दलध्वानमर्दिताखण्डब्रह्माण्डभाण्डोदरातिमधुरगानगुणगर्वदुर्वारगन्धर्वगन्धर्ववदनगणगीयमानचरणाम्भोजमहिमपरम्परा रथनिकरनिकामवर्द्धमानमधुरमन्द्रतारतरध्वनिघोरणीभारितचतुर्दशभुवनावनीविंध्यावनीधरमूर्धानं त्रिभुवनैकपुरमध्यप्रासादमिवाध्युवास नन्दिनी यशोदायाः ।

यद्वन्ध्यमुद्यमं विन्ध्यो विधायाज्ञां दधे गुरोः ।
तदभूत्पार्वतीधाम गुर्वधीना हि सिद्धयः ॥ ३१ ॥

इतिश्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये
द्वितीयोऽयमुल्लासः ॥ २ ॥

---

(१) इयं कथा भा० १० स्कं० ४ अध्याये ।

# अथ तृतीय उल्लासः।

अथ कुमारीमादायगच्छत्येव वसुदेवे परिणतशरदिन्दुमण्डलः क्रोडे क्रीडतीति स्वप्नमनुपश्यन्ती द्रुतमुपजातजागरा काचमन्वेषमाणा काञ्चनमिव, कौपसलिलमनुगवेषमाणा गङ्गाप्रवाहमिव, सा कोटतरुमर्थयमाना कल्पतरुमिव; शम्बूकमनुसन्दधाना दाक्षिणावर्त्तशङ्खमिव; इन्धनमनुधावमाना चन्दनमिव; कर्कन्धूफलमन्विच्छन्ती द्राक्षाफलमिव; कामपि धेनुं कामयमाना कामधेनुमिव; कुटीरमभिकाङ्क्षन्ती महाप्रासादमिव, नीवारकणमनुचिन्तयन्ती तण्डुलराशिमिव; दृषदुर्वीधरमभीष्टयन्ती सुमेरुमिव; औषधमनुमार्गन्ती नैरुज्यमिव; नौकामाकारयन्ती स्रवन्तीपारमिव; अजमाजन्म मृगयमाना महागजमिव, अन्धयष्टिमुद्दिश्य यन्ती दिव्यदृष्टिमिव, आतपत्राणाय पत्रमाभिलिप्सन्ती दिव्यातपत्रमिव, अवगाहनाय क्षाराम्भोधिमीहमाना सुधाम्भोधिमिव, लोष्टमनुचेष्टमाना श्रेष्ठनिधिमिव, कमपि कुमारं सुचिरमासाधिरुढयन्ती निगमनिगूढं हठान्निजाङ्कमधिरूढं हरिमुपलेभे व्रजेद्रसुन्दरी यशोदैव।

अथ सपदि समुत्तिष्ठन्त्या गृहान्तरालमनन्धकारमनुभवन्त्याः सर्वानिर्वचनीयाभिरामाभिरपि श्यामलाभिरभिभावयन्तीभिरपि प्रदीपशोभाः, शोभमाने कमनीयकौमारवपुषि सुदिनप्रभातभातकमलकोषकन्दरे सुचिरमुपोषितचञ्चरीकीव, परिणतसुधाधामनि द्राघीयोदिवसकठोरज्येष्ठनिष्ठुरारुणकाठिनमयूखहूयमाना चकोरीव, अकस्मादुपचितहैमभूमनि दारिद्राचित्तवृत्तिरिव, अभिन-

वकलमकन्दलशालिनि केदारे क्षुधितकुरङ्गकिशोरीव, अतिरमणीयरामणीयलवणिमनि विषयावेशवशीकृतशेमुषीव, अधिकजरत्तरगौरिवागाधसुधापङ्कसंकटे हठेन निपतन्ती निर्ममज्ज गौर्यशोदायाः ।

स्वलोकमाकारयितुं रयेण चिरं विवक्षोरपि पक्ष्मलाक्ष्याः ।
प्रियं परिज्ञाय ह्रियेव वाणी नासीत्तदानीं बहिरास्यगेहात् ॥१॥
समं तदा गोकुलचक्रमासीदुन्निद्रमाशीर्षतनूरुहेण ।
स्तन्येन पुण्यैकनिकेतनाया मुदस्रमामादचिरादजस्रम् ॥ २ ॥
नन्दारविन्दायतलोचनायाः पुरस्तनूजे सति जायमाने ।
सोदर्य्यभावादिव वीक्षणार्थमभ्युत्थितं तैरपि तत्तनूजैः ॥३॥
आनन्दकन्दे सति नन्दनेन्दौ ननन्द नन्दाम्बुधिरुत्सवेन ।
मुदस्रवीची वदृधे विशाला दृक्कूलमुल्लङ्घ्य च रंहसैव ॥ ४ ॥
अन्तर्गते कर्णपथेन दूरात्सुतोऽजनीति ध्वनिसिद्धमन्त्रे ।
जाग्रत्तनूजालिमिषेण तस्य हृच्छल्यजालानि बहिर्गतानि ॥५॥
आशंसते वंशवंसजन्म शर्माकुलोऽसूनददद् व्रजेन्द्रः ।
वसूनि दत्त्वा पुनराददेऽसौ तस्मात्स्वसूनोरवलोकनाय ॥६॥
पश्यन्नपि श्यामलधाम सूनोर्न रूपभेदं पुनरेष वेद ।
निःस्पन्ददृक्केवलशालभञ्जीगञ्जी मुदासीदवशीकृतात्मा ॥ ७ ॥
प्राणैः सहात्मानमदत्त तस्मै तच्छ्यामधाम्नेक्षि वसु द्विजेभ्यः ।
वपुर्जडिम्ने प्रमदाय चेतो नन्दस्य नासीदथ देयमेव ॥ ८ ॥
सर्वस्वानि ददे द्विजाय सहसा नन्दो महानन्दितो
विश्वानन्दिनि नन्दने पुनरधात्प्राणात्मनः सेन्द्रियान् ।

कस्मैचिद्विवशीकृतेन मनसा दास्यत्यथाङ्कं हठा—

दुद्दण्डायितमित्थमङ्गजकुलैरात्याकुलैः सर्वतः ॥ ९ ॥

स्खलन्तमात्मानमथाक्षिपन्तमन्यं च वासः स्खलदङ्गतोऽपि ।

पतङ्गमङ्गेष्वपरं दहन्तमग्निं च किञ्चिन्न विवेद नन्दः॥१०॥

मनोऽपि नेतुं न मुनिः शशाक हविर्लवं ग्राहयितुं न होता

तमङ्कमारोप्य चिरं यशोदा स्नेहस्नुतं स्तन्यमदत्त तस्मै ॥११॥

पङ्कापहारी हरिराविरास पङ्कान्न शङ्का किल काचिदेव ।

इतीव चक्रेऽखिलगोपचक्रं पङ्कैरनातङ्ककुतूहलानि ॥ १२ ॥

द्रागेव दूरात्सति नन्दसूनौ पलायितं पङ्कपरम्पराभिः ।

काश्मीरकर्पूरपटीरपूरक्षीरैरकारीति धरासु पङ्कः ॥ १३ ॥

इयं धरित्री हरिणा भवित्री परिच्युता निर्भरतापभारैः ।

विश्वासमस्या हृदि बल्लवेन्द्रो बध्नाति दध्ना स्म विधाय सेकम् १४

पङ्कापसाराय कथा मुरारेरास्तां विदूरे विदिते हि तस्मिन् ।

उत्सारयामास विगाढपङ्कं न गोकुले कः पदलीलयापि ॥१५॥

शिशोरमुष्यामलकीर्तिपूर्णा स्यादेव भूर्नाम विना विलम्बैः ।

अपूरि सा गोकुलपूरितीव क्षीरोल्लसत्पाण्डुरकीर्तिपूरैः ॥ १६ ॥

भारापसाराय हरिर्ममासौ क्षीराम्बुधेरेव समाजगाम ।

विजानती भूरिति सा बभूव पङ्कच्छलक्षीरमयी क्षणेन ॥ १७ ॥

पात्रीकृत्य धरित्रीं चन्दनकर्पूरकुङ्कुमैर्गोपाः ।

विदधुः पङ्कमहोत्सवमुत्साहानां च दुष्करं जगति ॥ १८ ॥

अतिमा(१)दमोदमत्ताभीरबहलकोलाहलमदकलमहिलाकुल-

---

(१) मादो मदः ।

कौतुहलाकुलकलकलकलकलबहुलतरोलूलू(१)लूपलङ्गलाचारैः, अतिमधुरमृदङ्गमर्दलविविधवर्धमानसुरमुनिमनुजमनोनुकूलकाहलाकुलवलितकलध्वानधाराभिः, मुखरितदिङ्मुखमङ्गलाधानधुरीणासंख्येयशङ्खनिध्वानैः, निर्धूतसुघनघना(२)घनानां घनानां घनाघोषैः, भृशमधरीकृतमधुमाधुरीकानां पीयूषादपि शिशिराणां सुषिराणां च निस्वनप्रकरैः, अतिगम्भीरदुन्दुभीनामप्यदभ्रनिर्भरध्वनिभिरपि चण्डीशाद्रिगम्भीरगह्वरगर्भारब्धप्रतिध्वनिमुखरचण्डिमडिण्डिमाडम्बरैरपि, रुचिरोच्चरितचर्चामपि साममङ्कारकारिणामपि जपजर्जरितजप्यपूकपूगयजुर्जागरूकाणामपि यायजूकानां वदनोदरविहरदखर्वाथर्वगर्वदुर्वाराणामुर्वीगीर्वाणानामाशीर्वादगीर्वाणैरपि दधिकर्दमसम्मर्दाखण्डपाण्डिम्ना समुदयदुरुडिण्डीरपिण्डपुण्डरीकखण्डपरिपाण्डरीभवल्लोलकल्लोलकुलकलकलनक्रचक्रादिकविविधयादोनादोद्धतदुग्धतोधेरनुकुर्वती रूपं गोपानां वसतिरतीव मुदे हरेरुदेति स्म। सुविदितबहुमङ्गलमहो महोत्सवपूर्वकं जातकर्म्मादिककर्म्माणि निर्मायाभीरसार्वभौमो बालकस्य लौकिकालौकिकरक्षामयांचक्रे।

अशोककोकः कमलाभिनन्दनः प्रभातभास्वानिव नन्दनन्दनः।
क्षणे क्षणे लक्ष्यविलक्षणक्रमो ननन्द सोऽनन्तरुचिस्तमःक्रमः॥१९॥
सुरक्षणाक्षीणविलासवल्लवः सुशोणशोभाधरनव्यपल्लवः।
दिने दिनेऽशोभत तुङ्गमङ्गलः सुरद्रुमस्येव नवीनकन्दलः॥२०॥

(१) उलूलूध्वनिमङ्गलाचारः साम्प्रतं वङ्गदेशे प्रसिद्धः।

(२) घनाघनः=अन्योन्यसंघट्टनः।

श्रुतिस्मृतिक्षालितविश्वदूषणः सगौरगोरोचनलेशभूषणः ।
स चीनपीतांशुकरञ्यदङ्गतो रराज राजेव नवोदयं गतः ॥२१॥
निशासु सन्ध्यासु दिनेषु यत्नतः स पश्यतामभ्यधिकं च रत्नतः
ऋषेरगम्यो व्रजवासशालिनां जगाम चक्षुर्मयतां विलासिनाम् ।२२।
स रोहिणीगर्भकृतावरोहणः सरोहिणीशद्युतिरीशमोहनः ।
दधच्छ्रियैरावतकालभक्रमं भुवीह केषां विदधे न भभ्रमम् ॥२३॥
दिनेसु गच्छत्सु कियत्सु मत्सरान्मनोदधज्झोषणभूतिमच्छरात् ।
स पूत(१)नां प्रैषयदुग्रशासनस्तयोस्तयोपाश्रितनाशवासनः॥२४॥
यमस्य दूतीव तमस्विनं जनं वयोवसाने हगिवाक्ष्यनञ्जनम् ।
समागता सा पुरि नन्दसुन्दरीसुतं चिकिर्षुस्तमसौ व्यसुन्दरी॥२५॥
अनिन्द्यमान्द्यं दधती गमे खला नितम्बबिम्बाहितहेममेखला ।
समुल्लसत्कुण्डलमण्डलश्रुतिः सुचारुशोभाखिलभीप्रतिश्रुतिः॥२६॥
मृगेन्द्रमध्या मृगशावकेक्षणा सहारकण्ठी सरसा बकेक्षणा ।
तनुत्विषा गञ्जितमञ्जुरोचना मुखेन्दुसौन्दर्यजगद्विरोचना ॥२७॥
दुकूलवल्लीपरिणद्धविग्रहा बकी त्रिलोकीमथितोग्रविग्रहा ।
समाल्पधम्मिल्लसमृद्धसौरभा ललाटसिन्दूरविमूढसौरभा ॥२८॥
हरेरसुग्रामकुवासनामिता सकालकूटस्तनभारनामिता ।
निगूढनक्रेव कृता तरङ्गिणी विगाढमायाघटनातिरङ्गिणी ॥२९॥
निलीनशार्दूलमिवोपकाननं प्रकाशयन्ती ललितालकाननम् ।
स्तनं दधाना विषमेचकाननं ग्रहीतुकामा दनुजान्तकाननम् ॥३०॥
जगाम नन्दस्य ततो निकेतनं लसत्त्रिलोकीगृहजैत्रकेतनम् ।

---

(१) भा० १० स्कं० ६ अध्याये पूतनावधकथा ।

उवाच वाचा मधुमाधुरीमुचा रुचा तिरोभूय रदस्य मौक्तिकम् ३१.
मुदे यशोदे तनयो नयोत्तमे न कस्य मेधाधिकमेचकोदयः।
चिरेण जातश्चरमे वयस्यहो महोदयं विन्दतु नन्दतु श्रिया ॥३२॥
भस्मभूषितमिवानलपिण्डं कोषगूढमिव सायकखण्डम्।
सा ददर्श समदर्शियशोदाक्रोडशायिनमशङ्ककिशोरम् ॥ ३३ ॥
एहि वत्स मुखमच्छदर्पणं द्रष्टुमुत्सववहं समुत्सहे।
इत्युदीर्य निजपाणिपल्लवं बल्लवेन्द्रगृहिणीपुरो दधे ॥ ३४ ॥
आशिषं कुलपुरन्ध्रि विधेहि श्रीपदं शिरसि साधु निधेहि।
एतया सह गिरैव विशङ्का स्वाङ्कतः शिशुमदत्त तदङ्के ॥ ३५ ॥
दन्दशूकमिव दामशङ्कया वह्निकूटमिव हाटकाशया।
चन्द्रहासमिव कन्दलीधिया नन्दशावकमदत्त सा बकी ३६॥
कालकूटमिव सा मृगनाभीभानतो हरिमिवैणमानतः।
भीमवज्रमिव पद्मबुद्धितस्तं बभार विभुममर्ममोहतः ॥ ३७ ॥
वामपाणिधृतमूर्द्धनिबद्धस्वास्तिकासनमधत्त तदङ्के।
कञ्चुलीं च समुदस्य कुचाग्रं दक्षिणेन च करेण चकर्ष ३८
कम्पमानभुवनत्रयमन्तःशोचमानमुनिदेवमशङ्का।
वामचूचुकमधत्त मुरारेर्बन्धुजीवमधुराधरबिम्बे ॥ ३९ ॥
श्यामचूचुकमतीव चकास श्रीधराधरपुटेऽरुणभासि।
बन्धुजीवकुसुमोदरमज्जच्चञ्चरीक इव कंचन कालम् ॥४०॥
मन्दमन्दचलदङ्कपदपाणिस्पन्दमानमधुराधरबिम्बम्।
प्राणपञ्चकमतर्पयदीशः प्राणपञ्चकमिलत्पयसास्याः ॥४१॥
वह्निदीपनकृते हरिरुग्रक्ष्माभुजामशनमारभमाणः।

षड्रसीमिव जघास स बक्याः प्राणपञ्चकपयोरसषट्कम् ॥४२॥
कालकूटकवलेन मुरारेर्दुःसहो जठरवह्निरदीपि ।
इत्यतिक्षुधित एव तदीयप्राणपञ्चकमपि प्रभुरादात् ॥४३॥
कालकूटमखिलैरविषह्यं पूतनापि निखिलैरविषह्या ।
सौहृदादिति तया तह भेजे कैटभारिजठरं विषकूटः ॥४४॥
कालकूटगरलाच्च गरीयो वेत्ति वैभवमसौ स्वमहिम्नः ।
तत्पथेन तदनु द्रुतमित्थं केशवोदरदरीं विजगाहे ॥ ४५ ॥
या व्यधत्त दधती हरिमङ्के मोक्षमाशु कुचकञ्चुलिकायाः ।
सात्ममोक्षमकरोन्न विचित्रं वस्तुशक्तिरपरैव जगत्याम् ॥४६॥

अथ पञ्चप्राणानुगतमायाप्रपञ्चं मा पिब मा पिबेति मुञ्च मुञ्चेति क्रोशन्त्याः, आन्दोलितभुजदण्डचण्डिमपुण्डरीकनयनमुत्क्षिपन्त्याः, आस्फालस्फुरदुरुचरणनिपात्यमानपानभवनमहीरुहधोरणीकं कंसं प्रति चरितमिदमाशंसादिव सार्त्तनादव्यात्तमुखरमुखमावर्त्तमाननयनभीषणं कम्पितभूमिचक्रमाक्रान्तबहुक्रोशपर्यन्तमत्यन्तभयदमतीव पीवरं वपुरपतदखर्वमुर्वीधराभोग इव ।

अनन्तरमस्याः पयोधरपारावारमुन्मथ्य पयो गरलं पञ्चप्राणाभिधानपञ्चद्रुमानपि तत्तच्छ्रियं चामृतं च समाहृत्य भूर्यैव मनसि विचार्य्य धूर्जटिना विषमन्यदा गृहीतममृतं पुनरसुरैः कृतश्रमैरपि न प्राप्तमेव इति केवलममृतमसुरकुलोद्भवायै तस्यै दत्वा सकलमन्यत्स्वमेवादत्त दैत्यकुलारातिः ।

धत्तेऽद्याऽपि हरः कण्ठे हारिरादत्त यत्नतः ।
दत्वामृतमहो बक्यै विषं स्वादमृतादिव ॥ ४७ ॥

निष्पतन्त्याः पृथिव्यां तु मुखमासीदनावृतम्।
दैत्यप्राणप्रयाणार्थमिव द्वारमनर्गलम्॥ ४८॥
घनयोः स्तनयोरन्तरशोभत नृकेसरी।
केसरीवं यशोमुक्ता जिघृक्षुः करिकुम्भयोः॥४९॥
लम्बमानस्य हारस्य पूतनोरस्यत्रास्थितः।
लोकैरतरलोऽप्येकतरलोऽगीयत क्षणम्॥ ५०॥

अथ सम्भ्रमाकुलचित्ताभिराभीरीभिरसम्भ्रममेव शयानस्तदुरसि शयेन स्वमेङ्कमानीयताचिरेणैव। तदनु ब्राह्मणानाहूय भूयसो भूयांस्येव भावकोद्भावीनि कर्माणि भावयामासुराभीराः। ग्रहानुग्रहनिर्वाहिनोऽपि होमानारेभिरे याज्ञिकाः। केचन महारुद्राभिषेकमनेकधा बुधा विदधुः। केचन मन्त्राणामेव जापं चक्रिरे महामान्त्रिकाः। केचन बह्वाशीर्वादानेव वितेनिरे सुधियः। केचन यशोदानन्दयोः पुण्यातिशयं वर्णयन्ति स्म महात्मानः।

अथ पूतनाया हरिपरिपीतस्तन्यतया परिपूतमेव तत्क(१)टं नातिनिकटदेशे कठिनकुठारादिना खण्डखण्डीकृतं संवार्य ज्वालयाञ्चक्रिरे गोपाः। यद्धूमादपि जगदपि सौरभगौरवेण सुरभि कुर्वन्तो मलयजागरुकाश्मीरकस्तूरिकापूरकर्पूरकुसुमालिसौरभ्याणि परिभवन्ति स्म बहुकालम्। कंसोऽपीति पूतनाचरितमाकर्ण्य विवर्णवदनो महापात्रपरम्परामाहूय मन्त्रानेव सन्ततं तेने।

(१) कटं=शवः।

(१)तमाहूय तृणावर्त्तमनावर्त्तितशासनः ।
गोकुलं व्याकुलीकर्त्तुमादिदेश विशेषतः ॥ ५१ ॥
आज्ञां शिरसि राज्ञां च प्रज्ञां स विरही वहन् ।
बाहुमास्फोटयामास मुखरीकृतदिङ्मुखम् ॥५२॥
अभिवाद्य महीपालमरालमतिभीषणः ।
प्राह प्राह्णेमि विश्वानि गोकुलं कियदाकुलम् ॥५३॥
ततश्चलितवानतिप्रबलचक्रवाकाकृति-
र्दितिप्रथितदंशभूर्मुदितकंसभूमीपतिः ।
भ्रमिभ्रमितभूधरं त्रुटितभूरिभूमीरुहं
नमत्क्षितिपतद्गृहं धरणिचक्रगूढग्रहम् ॥ ५४ ॥
तरङ्गतरलीभवत्तनुतरीतुलं गोकुलं
समाकुलितगोकुलं मुषितसर्वगोगोकुलम् ।
प्रचण्डपटुचंक्रमोच्छलितरेणु सद्दारुण-
श्चकार चकितं जगत्तिमिरवर्षिवर्षोदयम् ॥ ५५ ॥
हरिमुग्धमहोविद्धमध्यया धूलिधारया ।
प्रयागं वर्त्तयामास तृणावर्त्तो रयाद्दिवि ॥ ५६ ॥
दधज्ज्वलदसुन्दरं मुरहरं तु चक्रान्तरे
सविभ्रममसम्भ्रमो भुवि दिवि भ्रमन्भ्रामयन् ।
अशोभत यशोभरैरहह चक्रवातासुरः ।
कुलाल इव केलिना कलितकाचकुम्भभ्रमिः ॥५७॥
तृणावर्त्तमहावर्त्तसमावर्त्तितविग्रहः ।

(१) तणावर्त्तवधकथा भा० १० स्कं० ७ अध्याये ।

स मायाचक्रविभ्रान्तवदनां वेद माधवः ॥ ५८ ॥

कलापकुसुमत्विषं परमपूरुषं तं दध-

न्महो भसितभूति चेद्भ्रमति चक्रवातासुरः ।

तदा कृतसनिद्रदृक्कमलगोकुलश्रीकुलः

शशीव दिवसोदरे भृशमदीपि सीमोपरि ॥ ५९ ॥

हर इव कण्ठेकालः कण्ठे कालत्विषं दधत्पुरुषम् ।

भूतभूतिचक्रवातस्तेनाघ्रातः स एव सञ्जातः ॥ ६० ॥

एवंविधभाविविधेर्विहितमखिलं खमिव, विस्तारितनिखिलस्वस्तिकस्तूरिकानेपथ्यमिव, भाविनीलाम्बरनीलाम्बरैकखण्डमण्डितकण्ठाभिख्यां प्रख्यापयन्निव, अतिचिक्कणैकमहानीलरत्नमिव, यत्नतो व्रजरत्नाकरदेवतारत्नं कलितकलापकुसुमसुकुमारकोमलाकारं नन्दकुमारं दधदेव तत्सङ्गादुपचितनिरवद्यवैशद्यमिव, चिरादेव भाविमोक्षतया प्रादुर्भूतसत्त्वगुणव्रजनगरीकरीषभूतिमादाय पाण्डरीभूतो बहुवेलमेव दिवि भुवि च चक्रवच्चक्रवातासुरो बभ्राम ।

तं चकर्ष चिराच्चक्री चक्रीकृतभुजद्वयम् ।

अकुण्ठमहिमा कण्ठे कण्ठीरव इव द्विपम् ॥ ६१ ॥

निपतन्नप्यधो दैत्यः सकलोपर्यरोचत ।

कृष्णस्पर्शमणिस्पर्शादसुरोऽपि सुरोऽभवत् ॥ ६२ ॥

असौ हरिपरीरम्भरसं वदे महासुरः ।

कण्ठग्राहिणि वैकुण्ठे यदकुण्ठो ददावसून् ॥ ६३ ॥

अथ विश्वम्भराभारसम्भारपरिभूयमानो वितीर्णप्राणो गो-

कुलभूपात्वेव प्राणपणगृहीतमितीव वैकुण्ठाकुण्ठमहिममहानील-रत्नं कण्ठे दधदेव नभोदेशात्परिवर्त्यापतत् तृणावर्त्तो नाम महा-दनुजः । हरिरपि तस्मिन्दत्तप्राणेऽपि प्राणाः प्राप्ताः पुनरपि कि-मपि प्राप्तव्यमित्याशयेनेवादत्ततत्कण्ठस्तदुरसि कालसर्पकिशोर इव बल्लवैर्ददृशे । तदङ्कशायी मायी शिशुरसौ महामहीधरोत्सङ्ग-विहारी करिकलभ इव, अभिनवजलदकदम्ब इव, देवैरपि दू-रादृदृश्यतेव बहुकालम् ।

अथ कदाचिदेकदा हरिजन्मर्क्षयोगजनितौत्तानिकमहामहो-त्सवकर्मणि शर्म्मनिकरनिरन्तरीकृतनिखिलमर्मणि समुदयनि-वार्यतौर्यत्रिकप्रकरे समवेतानामखिलघोषयोषाणामविरल-वर्द्धमानबहलकौतूहलकोलाहलानां समुचितरचनार्थमादृतया यशोदया विस्तारितसमस्तस्वस्त्ययनमधस्तादेव शकटस्यास्तृ-तशयनीये कपटनिद्रया मुद्रितार्द्धनयनमाहितगोरोचनैकातिलकं कुलतिलकं संवेश्य प्रस्थितं क्वापि ।

अर्द्धोल्लसदवस्थायमर्द्धोदञ्चाद्दिनद्युति ।
वपुर्मायाशिशोरासीदर्द्धकालीश्वराकृति ॥ ६३ ॥

प्रत्यग्रशकटभङ्गरङ्गाविर्भूतया प्रभूतया रुषेव मनाङ्मिलदर्क-कर्कशरुचा सुचारुदृक्कोणमाक्रम्योज्जागरितो मानुषकिशोरानुकृतिं वितन्वानः किञ्चित्कुञ्चितदृष्टिपटुकुटिलीकृतभ्रूपुटस्फुटलघुजृम्भा-रम्भाविकसदर्द्धवदनाम्भोजं मुहुरामोटितघटितघनालसस्फुटितघ-नाघनसन्निभापघनं मृदुतरतल्पतलानल्पनिमज्जनाभिव्यज्यमान-किङ्किणीप्रमुखविभूषणाङ्कपरम्परं मन्दं मन्दं मृदुकरचरणारविन्द-

मुत्क्षिपन्नेव स्तन्यार्थी चक्रन्द नन्दनन्दनो बहुकालम् । तत्क्षणजनितबुभुक्षयोत्क्षिप्तकरचरणमाक्रन्दनो नन्दनन्दनस्य ध्वजवज्राङ्कुशकुशेशयाङ्कपदपङ्कजाभिघातेन विघटितपटुचक्रकूबराद्यवयवमुद्घाटितहांटिकादिभाजनजनितझणझणाकारपूरिताशेषदिग्भागं त्रुटितघटघटीघटाविघटनादिभूतारावस्फुटितपुरपरम्परानरादिकर्णबाढं निपतितमचिरेण परिवृत्य श(१)कटेन ।

आक्रन्दितमिवाकर्ण्य कर्णायतदृशो हरेः ।
(२)अनसा पतितं व्यग्रमनसा तरसा भुवि ॥ ६४ ॥

यादवेन्द्रपदस्पर्शादवसायेतचेतसा ।
अनसा न नसा नूनमशायि तरसा भुवि ॥ ६५ ॥

शिशूभूय परं ब्रह्म पुनर्दुग्धाय रोदिति ।
समुत्पतितमिवेव चमत्कारैरिवानसा ॥ ६६ ॥

हरेः परमनोभङ्गैर्मनोभङ्गः परस्य च ।
कियदिनं पदाम्भोजक्षिप्तानस्त्वेन भण्यते ॥ ६७ ॥

जाता क्षुधा बलवती सविधे न माता
तातादिकं च न च कश्चिदथालुलोचे ।
चक्रन्द मन्दमशृणोन्न च कश्चनेति
बालः क्रुधा शकटमेव पदा बभञ्ज ॥ ६८ ॥

कचिदपि समये व्रजेन्द्रसुन्दरीत्रिभुवनसौन्दर्यपर्याप्त्यधिकरणमनादिमनन्तमखिलादिं सुतमाधायाङ्के निरातङ्केन मनसा

---

(१) शकटासुरकथा भा० १० स्कं० ७ अध्याये ।

(२) अनसा=शकटेन ।

मृगादृशालिनी स्तन्यपरिपानकृतावधानमुपलालयन्ती व(१)प्रेति, पितरिति, जनकेति, तातेति, धनजनसकलसम्पदिति, विपदनयनधुरन्धरेति, बान्धवेति, जीवेति, जीवनसुखेति, सुखनिधानेति, गुणनिध इति, वत्सेति, चन्द्रवदनेति, नन्दनेति, नन्दहृदयानन्दनेति, ईश्वरेति, स्वामिन्निति चक्षुरिति, अन्धलगुडेति, मन इत्यात्मन्निति, निन्द्रां याहीति, मधुमाधुरीधुरीणया वाचा करकोमलकमलाभिमर्शणेन जानुद्वयविधूननेन शनैः शनैर्मुद्रितार्द्धनयनपद्मं निद्रामनुभवतो व्यात्ताननमुत्तानशायिनः शिशोराननमुदितमुदश्रुमेदुरमुखमीक्षितुमारेभे ।

तत्रान्तरे पुनरेकाकिनीमेव जननीमवलोक्य त्रैलोक्यवैभवमात्मकुक्षिनिक्षिप्तमघटनघटनापटीयसीं प्रपञ्च्य तामसीं तामसीममायामातिनिद्रानुकुलां मातुर्वचनालीमिव सफलीकुर्वन्सर्वं तदवस्थ एव मात्रे(२) दर्शयामास ।

सापि क्वचिदिन्द्रं क्वचिदिन्दुं क्व च सिन्धुं क्व च बन्धुं क्वाचिदपि विन्ध्यमन्दरमेरुकैलासमलयमुखावनीधरं कुत्रापि सुरनरकिन्नरसिद्धविद्याधरयक्षरक्षोनक्षत्रग्रहचक्रं किमपरमखिलं जगदेव वितस्तिमात्रविस्तारभाजो बालस्य गर्भैकदेशे विवर्त्तमानमालक्ष्य किमिदमिति सम्भ्रमाच्चक्षुषी पिदधे निजमोहमेव मेने यशोदा ।

अत एव केचन पुनरिदमादिकैतवपरम्पराः कैटभारातेरव-

---

(१) 'वप्रस्ताते पुमान्' इति मेदिनी ।

(२) विश्वरूपदर्शनकथा भा० १० स्कं० ७ अध्याये ।

धायैवमभिदधते सुधियः ।

क्रोडारूढो निपीय स्तनरसमलसीभूय निद्रामुपेत्य
व्यातेने मातृमोहं कपटघटनया यद्भवान्कैटभारे ।
आजन्माजिह्मधर्मस्तुतिमुखरमुखब्रह्मणो मूढभावं
तद्गोपीनां च तादृक् त्वयि पुनरियता योगिनः सावधानाः ॥६९॥

अतल्पे तल्पे वा स्वपिति न विकल्पं वितनुते
मृदं माध्वीकं वा ग्रसति रसभेदं न मनुते ।
अमित्रं मित्रं वा स्पृशतु जनमात्रं मदयते
शिशोस्तत्वज्ञानादधिकसुखदा नाम शिशुता ॥ ७० ॥

क्षणं जनन्या जनकस्य च क्षणं कृतक्षणं वक्षसि निर्ममज्ज सः ।
सघोषहासस्फुरदद्विजाननो ममज्जतुस्तौ सुखतोयधौ पुनः ॥७१॥

हुताशमत्रासमधत्त पाणिना भुजङ्गमादत्त स रङ्गमानसः ।
निवार्यमाणोऽपि जनैः कृतेक्षणैर्न वीरता शैशवसाम्यमञ्चति ॥७२॥
रजो विभूषा परिधा दिगम्बरं धरैव शय्या हसितं च भाषितम् ।
उपेतमात्रस्य सुखार्पणं क्रिया मुरद्विषाकारि शिशुत्वसंपदि ॥७३॥
हरिदम्बरो वदनवादनप्रियो गणपालकार्भगिरिजातकौतुकः ।
हरिरर्भकोऽपि गृहिणां महेश्वरो बलभूतिदर्शितशरीरसौभगः॥७४॥
अलकाकुलालिकमनोऽभिनन्दनः शिशुराननन्द भुवि नन्दनन्दनः ।
उरसा प्रयाणरभसप्रयासभाग्घनसारपङ्कपरिसंकुलाकृतिः ॥७५॥
कृतचूत्कृति गृह्णतोऽभिधानं पितुरग्राहितहस्तयोः प्रयातुम् ।
चलदङ्घ्रितपोघझम्पमीहे कति कैशोरवशो नृकेसरीह ॥ ७६ ॥
भुवि लुठच्चरणं करजानुना क्वणितघर्घरनूपुरकिङ्किणि ।

स जननीजनकोत्सवमावहंश्चलितुमैच्छदगच्छदवत्सरः ॥ ७७ ॥

स्खलन्नपि पुनःपुनः परमयत्नतो जानुनी
निधाय धरणीतले करतले च कौतूहली ।
हसन्मुखमुरस्थलीतरलतारहारं हरि-
र्व्रजन्नहरदन्तरादहरहर्व्रजानां मनः ॥ ७८ ॥

यन्नामापारसंसारपारावारमतीतरत् ।
शङ्कते स करालम्बी तरीतुं पितुरङ्गणम् ॥ ७९ ॥

आश्वासमिव कुर्वाणो मह्या एव यदूद्वहः ।
महीपृष्ठेऽर्पयत्पाणी जानुभ्यामनुसंचरन् ॥ ८० ॥

चलत्कनकमेखला कलकलाभिरामा क्वण-
त्कराग्रमणिकङ्कणा तरलहेमहारा हृदि ॥
उदीरितहरिक्रियागुणरुचेर्यशोदा स्वयं
ममन्थ दधि मन्थरं, मुरजिद(१)ङ्गति प्राङ्गणे ॥ ८१ ॥

श्रोणीकूले दुकूलं तदुपरि रसनां कण्ठमालां च कण्ठे
धम्मिल्ले मल्लिकायाः स्रजमुरसि जयोः कञ्चुलीं चादधाना ।
शिञ्जन्मञ्जीरमञ्जन्मणिवलयकरं सा दधि श्रद्दधाना
मन्दं मन्दं ममन्थ व्रजपतिनगरश्रीर्यशोदा यशोदा ॥ ८२ ॥

वारं वारमुपैति मन्थनविधौ मन्थान्तिके माधवो
मातुः कर्षति चोलमञ्चति हसन्मन्थानमालम्बते ॥
स्तन्यं प्रार्थयते पिबत्यपि करैर्हैयंगवीनं दधद्-
भुङ्क्ते चेति निरीक्ष्य नन्दगृहिणी मग्ना मुदम्भोनिधौ ॥८३॥

---

(१) अङ्गति=गच्छति। अगिधातुर्गत्यर्थकः ।

कराभ्यां जानुभ्यामुपचितकिणाभ्यां लघुचल-
न्सपङ्काङ्काङ्गो हरिरलिकलम्बालककुलः ॥
जनन्या नानेति स्तनितजनितानन्दलहरी-
परीवाहप्रायःस्मितरुचि ममञ्जोरसि मुहुः ॥ ८४ ॥

एकदा यदुमणिः क्षुधातुरस्स्तन्यमेव जननीमयाचत ।
सापि चारु परिचुम्ब्य तन्मुखं दातुमारभत दुग्धमात्मनः ॥८५॥
गोरसे मयि रमा रसायने बल्लवीस्तनरसस्तु पीयते ।
क्षीरसिन्धुपतिनेति मत्सरादुत्ससार सहसानले पयः ॥ ८६ ॥
अर्धपीतमपहाय माधवं दुग्धरक्षणकृते दधाव सा ।
प्रार्थयन्नहह तामनुव्रजन्सोऽग्रतो दधिघटीमुदैक्षत ॥ ८७ ॥

सातङ्कदृष्टि जननीपथमीक्षमाणो
दृग्भ्यां दधीनि वदने च ददत्कराभ्याम् ।
तद्गोरसस्य दहनोत्पतनव्रतानि
तानीव कैटभरिपुः सफलीचकार ॥ ८८ ॥

स खलु मनुजकैशोरमनुकुर्वाणो नानोपायेन प्रतिनवदश-नाङ्कुरार्द्धदशनबद्धमुष्टिकरकमलचपेटापातनधरणितलाभिघर्षणा-दिना दधिभाण्डमखण्डमभिखण्ड्य निजतुण्डे किमपि निक्षिप्य दशमुण्डखण्डनधुरन्धरावतारसमुचितपारिचर्याचण्डाधारचतुरतरु-मृगानुस्मरणेन तत्किशोरमण्डलाय पुण्डरीकपरिपाण्डरं खण्ड-मण्डितमुपकल्पानलाकठिनममण्डं दधि खण्डखण्डशो दत्त्वा लि-प्त्वा च धरणितलमनेनानेकधा निधाय च धावमानवालिभुजा-मग्रतो भयचकितमनाः प्रपलाय्य साज्यदधितुन्दाबिन्दुभिः कु-

न्दतुन्दिलविमलमुक्ताफलपरम्परातिसुन्दरकरवदनारविन्दोदरो यमलार्जुनमहामहीरुहभञ्जयात्रामङ्गलमिवाङ्गीकृत्य विजनानिहितो दूरबलदण्डमण्डनीभूय तस्थौ ।

अथ चुल्लिकामस्तकस्थापितस्थालीमध्यस्थितमुग्धदुग्धमभिरक्ष्य दधिभाण्डागारे दधिभाण्डमभिखण्डितमालक्ष्यालक्ष्य च तत्र तनमयनया कुण्ठितकण्ठनालमरालतरालकनिकरसंकुलालिकमाशङ्काचकितविलोकितं दधिकर्दमसंमर्दीकृतविग्रहं कवलितमृणालशकलतदखण्डमण्डितकरिकलभमिवावलोकते स्म सविस्मयमनाः पुण्यपरिपाकं व्रजेन्द्रकुलपुरन्ध्री ।

अथ बल्लवी निजात्मजतत्त्वानभिज्ञतया चतुर्णामपि चाम्नायानामगोचरमविषयमपि योगीन्द्राणां योगनिर्मलीकृतमनसामनाराध्यमपि त्रयाणामेव गुणानां स्वेच्छामयमजरमजन्मानमुपचितनिखिलशर्म्माणमात्मनो मर्माणं कृतसकलनिर्माणमाकरं धाम्नां परमास्पदं महिम्नामतिभूम्नामेकाधिकरणमहर्निशमपि साम्नाभिगीतं नाम्ना कर्मणा वर्ष्मणा चानन्तं मायागुणबन्धयन्त्रितनिखिलममायाखिलबन्धुदाम्ना बद्धुं मनो दधे मूढा ।

अथ बन्धनाय(१) गोप्या ये ये गुणाः समानीयन्ते त एव तन्मायागुणगरिम्णा परिभवं प्राप्नुवन्त इव लघिमानमनुभजन्तीति शतधा, सहस्रधा आनीतैरपि न्यूनैरेवाभवद्भिर्नाशक्यत बद्धुं गीर्वाणसिन्धुरः कुतुकी ।

गुणौघाहरणं गोप्या गुणौघहरणं हरेः ।

---

(१) इयं कथा भा० १० स्कं० ९ अध्याये ।

द्वयमेव द्वयोरासीदेकदा परमद्भुतम् ॥ ८९ ॥

इदमवसरमवकलय्य लज्जयन्निव हासयन्निव सरसवादमवादी [नारदः] प्रभुवरयतत्त्वकोविदो भक्तकौतूहली दूरस्थितोऽपि सविध इव सर्वान्तर्यामिनमानन्दघनमपघनग्लपितघनाघनं परितः ।

उररीकुरु वैकुण्ठकण्ठीरव निजं गुणम् ।
किमङ्गीकुरुषे दम्भमारम्भे गुणसम्पदः ॥ ९० ॥

त्वया बद्धमिदं विश्वमनया त्वं निबध्यसे ।
सहस्वानुचितं नैव गोविन्द ! गुणबन्धनम् ॥ ९१ ॥

गुणैर्विश्वं निबध्नासि गुणैरेव निबध्यसे ।
नन्दनन्दन माक्रन्द स्वकर्माशीहि पूरुषः ॥ ९२ ॥

प्रस्वदैर्वालितं कचैर्विगलितं धम्मिल्लमाल्यैश्च्युतं
हारैश्च त्रुटितं वलैर्विघटितं छिन्नं च काञ्चीगुणैः ॥
श्रान्त्यैवोपचितं श्रियाप्यपचितं दामानुसन्धानतो
धावन्त्या हरिमातुरातुरदशैवासीदसीमोदया ॥ ९३ ॥

अथ परमदयामयार्द्रमानसो बहुशो विलोक्य जननीव्यामोहानपहाय गुणहानमायाप्रपञ्चं निखिलश्रुतीरपि वितथीकुर्वाणो भगवान् निर्गुणोऽपि गुणबन्धनमेवोररीचक्रे ।

करुणाम्भोनिधेरासीदहो कारुण्यकौशलम् ।
कर्म्मबन्धच्छिदे तर्वोरुरीचक्रे स्वबन्धनम् ॥ ९४ ॥

जितानेकगुणोऽप्येकगुणसन्नद्धमध्यमः ।
अशोभत स वैकुण्ठनवकण्ठीरवो भुवि ॥ ९५ ॥

वशीकरणसामग्रीं यशोदा वेद नापरः ।

यथोलूखलदामभ्यामभ्यानाथि वशो हरिः ॥ ९६ ॥

एतादृशि समये हरी रभसाविशेषविज्ञोप्यज्ञ इव सकुतुकमात्मनो मनः प्रत्याह —

अभूत्पुरा भूतल एव कुण्ठो वैकुण्ठकण्ठीरव एष दाम्ना ।
मनो मनोराज्यमिदं मदीयं जवादिदानीमनुधाव धर्तुम् ॥९७॥

यशोदा पुनरुलूखले नरकेसरिणमभिनह्य दाम्ना, महाकेसरिणमिव लूतातन्तुना, स्वयं तु भवनान्तरगाहतैकान्तं परिश्रान्ता ।

नासाग्रे निहिताङ्गुलीकिसलयः क्वापि स्वयम्भूरभू-
ज्जम्भारिः क्व च मूढभावमभजत्संदष्टजिह्वाञ्चलः ॥
ब्रह्माद्याः क्वचिदापिरे दिगधिपा द्रागेव निद्रादशां
तस्थुर्व्योमनि के न दुःस्थितधियो लेखास्तु लेखा इव ॥९८॥
व्यापारं विजहावहर्पतिरपि व्यामोहमन्तर्वह-
न्वातो व्यस्मरदेव विस्मयवशात्स्वाभाविकीं स्वां गतिम् ॥
बद्धे गाढमुलूखले मधुरिपौ तद्धैर्यमासीन्मह-
द्यद्गीर्वाणगणा न पेतुरवनावन्तश्चमत्कारतः ॥ ९९ ॥
दामोलूखलबन्धयन्त्रितमहो रूपं परब्रह्मणः
कुर्वाणं पुरतः किमित्यभिलपन्योगं जहौ योगिराट् ।
सन्देहप्रशमाय निर्गुणमिति प्रख्यातवत्यश्चिरं
सव्रीडा श्रुतयो निगूढगतयः प्रैक्षन्त साक्षादपि ॥ १०० ॥
वारम्वारमुदीक्ष्य दिक्षु चकितं मातुर्भयान्नारद-
व्याहारं सफलीचिकीर्षुरवनौ घर्षन्करौ जानुनी ॥

मञ्जीरध्वनिकिङ्किणीध्वनिमनोहारी महोदूखलं
कर्षन्दामनिबद्धमध्वविरही तर्वोरगादन्तरम् ॥ १०१ ॥

नन्दं च नन्दगृहिणीं च शुचा निनिन्दुः
के वा न वीक्ष्य तमुदूखलदामबद्धम् ॥
द्वौ चक्रतुः समुचितं प्रवरौ तरूणां
यद्वेजतुर्भुवि निपत्य सुचूर्णभावम् ॥ १०२ ॥

क्षीरबिन्दुकृते बन्धः क्षीरसिन्धुपतेरिति ।
दलत्तरुमिषाद्दोर्भ्यां ताडयमास भूरिव ॥ १०३ ॥

(१) आकर्षन्तमुदूखलं नियमितं दाम्ना रुदन्तं पुरो
दृष्ट्वा मृष्टधृती सुदुःखितमती यद्भूरुहौ पेततुः ॥
तद्वीक्ष्यैव तयोर्दयोचितशुभारम्भं स्वयम्भूमुखाः
श्लाघ्याः कल्पमनल्पयानवसतीस्तीभ्यां ददुर्द्राक्सुराः॥१०४॥

पततोरेव तयोरुर्वीरुहयोर्वज्राहतयोरिव भूमिधरयोरेकदा त्रिभुवनमपि मुखरीकुर्वाणं निर्घातध्वनिमिव निर्घोषमाकर्ण्य कर्णं पिदधुरपि गीर्वाणाः । लङ्कायामपि शङ्काकुलचेतसो विभीषणाद्याः किमद्याकस्मिकस्मरमर्दनोद्दामाशनिकठिनधनुर्भङ्गभाङ्कारोऽनुभूयते भूय इति वितर्कन्ति स्म । अचिरादेव भोजभूपालभूगोलं तु किमिदमिति शङ्कयेव चकम्पे शम्पेव । कंसः पुनरात्मनो गणानुवृत्तिमनुसपधत्त को मृतः को मृत इति ।

पूतनानिधनभूतवेदनो वेद नोऽपरमदेवभूपतिः ।
आर्त्तनादमभिशङ्कते कृतं स्वैर्गणैर्जलधरेऽपि गर्जति ॥१०५॥

---

(१) यमललार्जुनपातकथा भा० १० स्कं० १० अध्याये ।

चिन्तयान्तरमकारि जर्जरं गर्वगर्जनमयं तु नोज्जहौ ॥
वागुराभिरभिरुद्धविग्रहो विक्रमं न हि जहाति केसरी॥१०६॥

नन्दादयस्तु चकितमभितो निभालयन्तः किमिदमिति च व्याहरन्तोऽनुधावन्तोऽपि तावपि भूमिरुहौ तयोरन्तरे कर्षन्तमुदूखलं दाम्ना बद्धमध्यं च समुदीक्षमाणाः परमविस्मयं भेजिरे गोपाः । नन्दः पुनरचिरादेव जगतामपि बद्धारमपि मोचयितारमुन्मुच्याङ्के निधाय विधाय च परिरम्भमासीत्को वेद कीदृशो नाम।

तयोः पुनरवनीरुहयोराकस्मिकपतननिदानमन्वेषमाणा नानानुमानानि तार्किका इव तेनिरे, परं विटपिकपटाचारिणौ नन्दनन्दनापकारिणौ कंसानुचारिणाविति मेनिरे केचित् । हरिसहचारिभिराभीरकिशोरैरावेदितमेतेन पातितावेतौ चलनविशृंखलोदूखलयन्त्रणेनेति । तत् पुनरेते नानुमोदन्ते स्म ।

तथाहि—

बालोऽयं कमनीयकोमलतनुर्द्वावेव भीमाविमौ
भूमीध्राविव भूरुहौ किमनयोः कुर्वीत भङ्गानसौ ॥
कः प्रत्येतु मदान्धगन्धकरिणो दुर्दान्तदन्तद्वयी ।
कुन्दातुन्दिलकन्दलीकिसलयस्पन्दैरवस्कन्दिता ॥१०७॥

अथ निजालिन्दे नन्दः समुपगम्योपनन्दादिगोपवृन्दान्याहूय दूयमानेन चेतसा बहूपशयानुपशयचिन्तामेव सन्तेने । तेषु समीचीनप्राचीनाभीरमनीषिणः पप्रच्छ करणीयानि । (१) तत्रोपनन्दो भूयसामपि भूतभाविवर्त्तमानवृत्तान्तानामभिज्ञो विज्ञापयामास ।

---

(१) इयं कथा भा० १० स्कं० ११ अध्याये ।

अविचारितकर्माणि न हि शर्माणि तन्वते ।
अपक्वानीव भक्ष्याणि दुःखायैवोपयोगिनाम् ॥ १०८ ॥
विचार्य्य विहितं कार्य्यमाशीयापि मनीषिणः ।
विधुलेखेव भूषायै तोषायैव च धूर्जटेः ॥ १०९ ॥
सुखाधानमपि स्थानमुज्जिहानोऽग्रदूषणम् ।
अमुञ्चन्तः समुज्झन्ति विषाक्तमिवौदनम् ॥ ११० ॥
क्षोदीयोऽपि खलु क्षेममक्षामयति (?) धाम चेत्
सुधीर्भजति गम्भीरनीरं ह्रदमिवाण्डजः ॥ १११ ॥
समुदश्चितदोषं चेद्धाम धीमान्न मुञ्चति ।
शोचते शुष्यगम्भीरनीरमीनोपमानभूः ॥ ११२ ॥
मनीषितमगृह्णानो मनीषाभिर्मनीषिणः ।
अनैषीदेव नीचैः स्वं पदं बलिरिवापदाम् ॥ ११३ ॥
अस्ति स्तः सन्ति विघ्नानामेको द्वौ च त्रयः क्रमात् ।
यत्र यात्रेव तद्यात्रा सा भूमिरनुभूयते ॥ ११४ ॥
इह यद्भावि तद्भावि विना पन्था मनीषिणः ।
गरिष्ठगरलग्रासो नाशु नाशोदयाय किम् ॥ ११५ ॥
बालं नन्दसमीचीनप्राचीनप्रचुरंतपः ।
पूतनाचक्रवातान्नस्तरुपातानतारयत् ॥ ११६ ॥
यत्र ते नन्दनो नन्द ! तत्रानन्दतरङ्गिणी ।
गोकुलं गोकुलं विद्धि गोकुलं तु न गोकुलम् ॥ ११७ ॥
अस्ति वृन्दावनं नाम वृन्दावनधुरन्धरम् ।
नन्दनं तत्तिरोभूय गुणैस्तरुगणैरपि ॥ ११८ ॥

पशूनामसुपोषीणि दोषमोषीणि सर्वतः ।
सपुष्पाणीव शष्पाणि सौमनस्यास्यदान्यहो ॥ ११९ ॥
अभिनन्दति कालिन्दी दलदिन्दीवरद्युतिः ।
उदेति जीवनं यत्र जगतामिव जीवनम् ॥ १२० ॥

समुपस्थितप्राणिमात्राणामातपत्राणश्रमापनोदनमृदुपवनविधूयमानतामरसाभिरामनवकिसलयग्रामचामरोच्चयोद्वीजनकुसुमचयविभूषणाय भूषणमधुमिष्टपेष्ठभूयिष्ठं फललक्षभक्षावितरणोपदेशगुरव इव गुरवः, शिखिवाहना अपि न विशाखाः, विशाखामृगशिरोभिरामा अपि न विशाखामृगशिरोभिरामा ज्योतिर्मयमण्डलाः, ज्योतिर्मयमण्डलावलितमूर्द्धानोऽपि न मेरवो, न मेरवोऽपि सरलतमालतालहिन्तालशालबकुलविशालरसालपनसकुटजपटुपाटलिपटलसाधुपूगप्रमुखाः, साधूपूगप्रमुखा अपि नारीकोलिललिताः, ललिता अपि न महेश्वरमहिष्यो, महिष्योपेशाभितपार्श्वा अपि न महिषाः, महिषादकुलमण्डना अपि न गण्डभागाः, पुन्नागानां निवहमनोहरा अपि न नागभूमयो, भूमयोगकरुचिरा अपि नाकाशा, नाकाशा अपि चारुजः, चारवोऽपि चारवोपसन्निहितमहामुनयो, नयोपलालिता अपि न नवप्रजाः, नवप्रजातप्रवाला अपि निःशौचदोषा दोषाकरकिरणजटाला, जटालाञ्छिता अपि न स्थाणवो, नास्थाणवोऽपि यत्र विविधमहीरुहाः प्रदीप्यन्ते ।

ये खलु पत्रिणोऽपि न पत्रिणो, नापत्रिणोऽपि अविपल्लवा अपि सविपल्लवाः सपल्लवाश्च, फलिनोऽपि न फलिनः, कतोप-

नद्धा अपि नलतोपनद्धाः, विपुलस्कन्धबन्धुरा अपि नविपुल-स्कन्धबन्धुराः, चीरैकमात्रपरिच्छदा अपि न चीरैकमात्रपरि-च्छदाः रामादयः, उल्लसत्करवीरा अपि नोल्लसत्करवीराः वा हिन्यः, अर्जुनसहिता अपि नार्जुनसहिताः युधिष्ठिरादयः, सु-मनःसुरभीकृतवासा अपि न सुमनःसुरभीकृतवासा स्वर्भू-मयः, अन्तरुल्लसिततमसोऽपि नान्तरुल्लसिततमसो निरुपधि-परोपकारकर्माणः, साधव इव भुवमावर्त्य वर्त्तन्ते।

तेषामनतिदूर एव त्रिभुवनमोदवर्धनो गोवर्धनतपोगोवर्द्धनो नाम महागिरिर्जयति।

यश्च श्रीवृन्दावनाभिधानसकलमेदिनीमूर्धानमलङ्कुर्वा-णोऽप्यलङ्कुर्वाणो गुरुगरिमगभीरधीरेहमोर्व्वीधरसौभगं सुभग-सितसितेतरारुणादिनानामणिरमणीयधामधोरणीमधुरिमकोटी-कोटीरमण्डल इव, उपरि रोदसीसीमानमनुशीलयन्निव, द्राघि-माणमवगाहमानो नन्दनवनामन्दमन्दारादिहासो महीरुहवृन्दा-नि सन्दोहैर्निजशिखरमहीरुहाणामीर्ष्ययेव संघट्टयन्, संघ-ट्टयन्नपि हिमकरमिहिरहयानामवलम्बनपरोऽपि वहति शिरः-परीणाहम्।

यं च खलु अचरमाशिखरिशिरोधिरोहिणि रोहिणीरमणे चरमगिरिसुतुङ्गसङ्गरङ्गिणि च पतङ्गे, तद्वयीरश्मिनिस्यूतमन्त-राले त्रिभुवनविजयमहामृदंगमिव कमनीयमणिकुण्डलमण्डलद्व-यमण्डितगण्डभित्तिमिवानुभवन्ति भूयांसः।

येन च कैलासेनेव कलितनीलकण्ठेन, नीलकण्ठेनेवा-

कुण्ठतमोत्तमाङ्गप्रवहद्दिव्यतराङ्गिणीप्रवाहेण, तरङ्गिणीप्रवाहेणेव लोचनगोचरीचकार समसमयमनोजखेदमूर्च्छनेन, मनोजखेदमूर्च्छनेनेव बहुवियोगकलितपरिणाहेन, परिणाहेनेव महदवलम्बनेन, सह विभूता वृता किमपरमवलीलयैव विश्वम्भरा देवी ।

यस्मै च स्पृहयन्ति वैकुण्ठायेवाकुण्ठभक्तयो धीराः । धीरायेवाचलस्वभाय, चलस्वभावायेव सुखलतैकभूमये, भूमयः इवावलम्बितानन्तशिरसे, शिरस इव शकुन्तलाभाभिरामाय, रामायेव कुशलवप्रप्रसूतये, कुशल्याप्रसूतये च नमस्कुर्वन्ति कति महात्मानः ।

यस्मादतिनीचा एव निखिलमहिधरग्रामाः । यस्मादनतिदूर इव सप्ताकूपारा अपि शिखराधिरोहिभिरनुभूयन्ते । यस्मादुपेतव्रीडा इव रीढापीडापनुत्तये पयोधिसलिलप्रवेशं बहु मेनिरे मैनाकाद्या महागिरयः ।

यस्य साम्यावलम्बनायेव नमितकन्धरो विन्ध्यवसुन्धराधरोऽद्यापि गङ्गागङ्गाधरोपसेवनव्रती नोत्थापयति मूर्धानम् । यस्य शिखरमहामहीरुहव्यतिकरकुसुमपरम्परा इव तारावलयो निशि निशि जगतैवानुभूयन्ते ।

यत्र च रक्ताकारभूतो दिनकरकिरणजिगीषाजाग्रत्तैजसीराशय इव धातुधोरण्योऽवधीयन्ते विबुधैः । यत्र च—

समुदितविपुलनितम्बा विम्बाधरशोभया सुभगा
गोवर्धनरुचिबाला रचयति परितो मनः शिलारूपम् ॥१२१॥

उदयदतन्द्राभोगः पत्रावलिचित्रमित्रकरयोगः ।
मृगमदसुरभिरवन्याः स्तन इव गोवर्धनो जयति ॥१२२॥

सदा वहति वाहिनी स्फुरति चामराणां चय-
श्चलन्ति करिखड्गिनः, सितशुभातपत्रं बभौ ।
अदूरसवितारको भवति पत्रिकोलाहलोऽ-
भ्युदेति महिषीवृतो नृपतिरेव गोवर्द्धनः ॥ १२३ ॥

क्षीरैस्तुन्दिलयन्मुहुः शबलयन्नानाविधैरौषधै-
रत्नौघैरभिभूषयन्निशि दिवा वर्षद्भिराभाः पृथक् ।
स्वालम्बामानिलावधूतविटपिच्छायाकरैर्लालयन्
गां नित्यं परिवर्धयन् जनकवद्गोवर्द्धनो वर्द्धते ॥ १२४ ॥

दिग्वामोरुपयोधरोद्भटपरीणाहाभिषङ्गक्षण-
प्रोन्मीलन्नवदर्भगर्भजतनूजालैः सरित्स्वेदवान् ।
धाराजस्रमुदश्रुमिश्रितदरीदृग्जाड्यभूमास्पदं
यः कामीव विजृम्भते रसमयो गोवर्द्धनः प्रावृषि ॥१२५॥

चन्द्रकान्तचयकान्तिकलापैर्यामिनीषु गिरिरेष शशीव ।
वासरे पुनरशीतकराभो लक्ष्यते द्युमणिकान्तमयूखैः ॥१२६॥

वृन्दावनं घनमुदेति मुदे कलिन्दकन्याजलं च विमलं विहृतिस्थलं तत् ।
शैलश्च यत्र सुखसार्थपदं पितेव तत्रैव नन्द तव नन्दतु नन्दनोऽयम् १२७

यदि कुर्वन्ति कुर्वन्ति न कुर्वन्ति न कुर्वते ।
धीराः साधुरयं पन्थाः संशयाः संशयास्पदम् ॥१२८॥

इति गिरिमभिनन्द्य नन्दमुख्या द्रुतमुपनन्दसमीरितामनन्दम् ।
रजनिपरिणतौ प्रयाणमेकं सुदृढमकुर्वत निर्विकल्पजल्पाः॥१२९॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये तृतीयोऽयमुल्लासः ३॥

# अथ चतुर्थ उल्लासः

अथ वसुमतीति प्रतीतिपत्राहितविविधार्थसार्थनामुद्धरणैर्नेतव्यानेतव्यविवेचनैर्वृषभरथघोटकादिसंघटनैर्विघटितमतिसौष्ठवतयाधीरैराभीरैरनवधानाभिमानभागिनी भाविनीव द्रुतमपसर्पन्ती कैरपि न विदितैव यामिनी नाम जनिरिव संसारवासनावासितान्तःकरणैः ।

हिमाश्रूणि विमुञ्चन्त्या सह सख्या त्रियामया ।
चक्रन्द कुक्कुटध्वानैर्गोकुलश्रीरिवाकुला ॥ १ ॥

अथ वृन्दावनविहरणशुभप्रयाणमहामहोत्सवदिदृक्षयेव लाक्षारसक्षालितायामिव नवकुङ्कुमपङ्कसङ्कुलायामिव कमलाकिञ्जल्कपुञ्जारुणसिन्दूरमञ्जुरञ्जितायामिव निजकरमण्डलाग्रनिकृत्तध्वान्तदैत्यरक्तौघसिक्तायामिव विस्तीर्णशोणास्तरणायामिव शोणीकृतायां पुरुहूतहरिति हरिदश्वो भगवान्प्रादुरासीत् ।

सभुवनं भुवनं कमलाश्रिया दिनमुखे न मुखेन बभौ स्त्रियाः ।
विधुरसाधुरसाय न मण्डलं रचयता च यता यमहो विधुम् ॥२॥

उदयता दयता खरतेजसा विहरता हरता च हरित्तमः ।
अरणतो रणतो हतरक्षसा दिनकृता न कृता न नभःश्रियः॥३॥

घनतमो न तमो हि भुजङ्गमो विकलयन्कलयन् श्रियमाबभौ।
दहनदाहनदारुणमण्डलो दिनमणिर्न मणिः शिरसो गिरेः॥४॥

अमलकोमलकोकनदावलेः सदलयो दलयोगकुतूहलाः ।
सुमधुरं मधुरञ्जितहृज्जगुर्मदनमोहन मोदय मेदुराः ॥ ५ ॥

अस्मरसीसरसीरुहबन्धना गृहासिता हसिताध्वगवाक्षतः ।
सुनयना नयनाम्बुजमुद्रणां रविनिभा विनिभान्त्यजिहीर्षवः ६

कृतमसां तमसामिव मण्डलं भवनभावनभातमुदस्तयन् ।
परमगारमगांतदपोहितुं सवितुरावितुराशु महोभरः ॥ ७ ॥

ललितचालितचारुगुरुद्वयं स्तनितमानितमाप पुरः प्रियम् ।
अमितकामितकारणगौरवं सदयकोदयकोकविलासिनी ॥ ८ ॥

धृतवतीतवती शुचमित्यनाविलमृणालमृणालयितमानने ।
पुनरसौ नरसौभगदर्शिनी प्रियमुखीयमुखेदमुपाददे ॥ ९ ॥

रविरहो विरहोग्रहुताशनं विघटयन्घटयन्मिथुनं मिथः ।
उदयते दयते स्म रथाङ्गयोरकृपणे कृपणे च कृपा प्रभोः १०

सततखातनिखाततमोऽम्बुधिं कवलयन्वलयन्बलवन्महः ।
विजयते जयतेजसि वाडवो न सविता सवितानसुमण्डलः ११

प्राप्य सूरकरजालशङ्कया शङ्कयापि न दिशर्क्षमण्डली ।
स्वप्रियेण सह शैलकन्दरे कन्दरेणुरवनाय निर्ययौ ॥१२॥

दीपिते विनिहितागवेधसा वेधसा भृशमतास्तिलाहुतिः ।
श्रीप्रबोधविधये विभात्वसौ भावसौष्ठवजुषा जगत्तनोः ॥ १३ ॥

सूरकुङ्कुमशिरा नभोगजो भोगजोद्गतमदः समुत्थितः ।
येन मुग्धरजसान्धकारितं कारितं भुवनमश्वताम्बुधौ ॥१४॥

ब्रह्मसृष्टिमहरन्महोदयोऽहो दयोपरहितस्तमोगुणः ।
प्रादुरास किल तच्चिकीर्षया कीर्षया रविमिषाद्रजोगुणः ॥१५॥

न क्षणात्तरलतारकं वियत्कं वियद्विधुदिगभ्यनन्दयत् ।
मुक्ततल्पकमिवोपधानवद्ध्यानवत्सुमनसां तु कुत्रचित् ॥१६॥

उज्झिताळिमिलनाद्वियोगिनी योगिनीव सुसमाधिमाददे ।
मुद्रिताक्षिकुमुदा कुमुद्वती मुद्वती दिनकृतास पद्मिनी॥१७॥

सूर मोचय ययावहंक्रियाहांक्रियामिति पुनः करोमि न ।
झङ्कृतैः कुमुदबद्धषट्पदी षट्पदीमिव वितत्य नौत्यमुम् १८॥

वैरिणः करगतासि पद्मिनी पद्मिनी हसति चन्द्र यासि किम् ।
रोदितीति मधुपस्वनै रसोनै रसौघघटिता कुमुद्वती ॥ १९ ॥

आविरास विरहस्तु दुःसहो दुःसहोदितरवेः शुचं कराः ।
इत्यभूत्कुमुदिनी मलीमसालीमसाधुविरुतां जहावलेः॥२०॥

मृत्युरेव सुखभूर्वियोगतो योगतोऽपि च परस्य योषितः ।
उत्पलिन्यविषयं तदग्रहीदग्रहीनहितरुग्वलिद्विषत् ॥ २१ ॥

कान्ताभिसारमकरोन्निशि नाम का का
का का भवन्ति तमसां गृहमभ्युपेतुम् ।
भूयिष्ठमिष्टबलिपुष्टतयाह का का
काकावली दिनमुखेषु हितैषिणीव ॥ २२ ॥

का का प्रिया प्रियतमं परिरभ्य दोर्भ्या-
मभ्यागतेऽपि मिहिरे न जहाति निद्राम् ।
जागर्तु सज्जयतु चोलमितीव का का
काकालिरालिरिव गूढगिरं चकार ॥ २३ ॥

द्राक् त्रुटद्युन्मेखलाद्याभरणमगणितभ्रष्टवासो भृशोद्यत्-
प्रस्वेदाम्भःप्रवाहं विगलितकबरीगन्धमारम्भि दीर्घम् ।
दम्पत्योर्युद्धलीला मदननरपतेरस्ति का कावशिष्टा
स्पष्टाभूद्दिङ्मुखश्रीर्विरमतु विदितं काककाकागिरेति॥२४॥

आभीरीभिरपि श्रीभिरुत्थितं पद्मिनीपतेः ।
मथितं दधि पूर्ताभिर्महोऽपूर्वाभिरैन्दवम् ॥ २५ ॥
आभीराः पिण्डमैक्षन्त नवनीतस्य मस्तुनि ।
मथिते पूर्वमम्भोधौ पूर्णचन्द्रमिवामराः ॥ २६ ॥
हैयङ्गवीनभृतभाजनभासिकक्षा
प्रक्षामनध्यमधुरा व्रजपक्ष्मलाक्षी ।
संलक्षितामृतघटीस्तनगूढकक्षा
प्रख्यातरूपविभवा भुवि मोहिनीव ॥ २७ ॥

अथोपनन्दभणितसमानन्दितनन्दादयो गोपा बृन्दावनोपसरणसमग्रसामग्रीसमारचनमारेभिरे प्रातः ।

गोधनानि समादाय सज्जीभूय बहिर्ययुः ।
आभीराः पुरतः पश्चादनोरूढा व्रजस्त्रियः ॥ २८ ॥
अव्याहारविमूढश्रीरगोव्यापारशालिनी ।
अथ गोकुलभूरासीद्धत मूर्च्छावतीव सा ॥ २९ ॥
अश्रूणीव विमुञ्चन्ती पतद्भिः कुसुमैर्मुहुः ।
वनश्रीरिव चक्रन्द पक्षिवृन्दकलस्वनैः ॥ ३० ॥
अथाऽध्वानमगाहन्त धवलीकृत्य धेनवः ।
घनापाये घनीभूय मरालाः स्वर्धुनीमिव ॥ ३१ ॥
अध्वानमभ्यधावन्त तमोनिर्धूय धेनवः ।
अधरीकृतहिण्डीरास्तारा इव नभःस्थलम् ॥ ३२ ॥
पन्थानमन्वशोभन्त धेनुधाराधुतैनसः ।
सिंधौ जिगमिषोर्धन्या स्वर्धुन्या इव वीचयः ॥ ३३ ॥

आसीद् द्राघीयसी धेनुधोरणीभिरनन्तरा ।
पदवी पुण्डरीकाणां मण्डलीभिरिवापगा ॥ ३४ ॥
धोरणीभिरलं धेनोरध्वा स्पर्द्धामगाहत ।
परिपाण्डरहिण्डीरमण्डलीमण्डनाम्बुधेः ॥ ३५ ॥
परितः परिधावन्ती धवला धेनुधोरणी ।
गोलोकमिव भूलोकमकरोदकरोधिनी ॥ ३६ ॥
पदवीमभ्यधावन्त धेनवो धूतरेणवः ।
मर्यादामानिलैर्मुग्धा दुग्धाम्भोधेरिवोर्मयः ॥ ३७ ॥
बभौ पाण्डरपल्यङ्कालङ्कारानसि गोकुलैः ।
फणीन्द्रस्य फणावृन्दैरङ्कशायीव केशवः ॥ ३८ ॥
मध्यारूढहरिप्रौढमनःपाण्डुपरिच्छदम् ।
उडूनामिव पूर्णेन्दुर्गवामन्तरगाहत ॥ ३९ ॥
क्व दूरोत्क्षेपणं पद्भ्यां मनसः क्वावगाहनम् ।
प्रभुरेव विजानीते निग्रहानुग्रहावपि ॥ ४० ॥
तदानांसि मनांसीव वृषैरिव महावृषैः ।
योजयामासुराभीरा वीराहङ्कारकारिणः ॥ ४१ ॥
महोत्कण्ठा मनांसीव तदनांसि महावृषाः ।
आशु प्रोड्डीनयामासुः पोतानिव महानिलाः ॥ ४२ ॥
द्विधाबद्धबलीवर्दमधावन्ननसो गणाः ।
घना इव घनीभूय पुरोऽस्तक्रौञ्चपङ्क्तयः ॥ ४३ ॥
गम्भीरैरनसां घोषैश्चक्रप्रोद्धूतधूलिभिः ।
अवरुद्धं नभो वीक्ष्य मेनिरे दुर्दिनं परे ॥ ४४ ॥

रजोरुद्धनभोधोषमुखराशमनःकुलम् ।
समुदग्रीवमुदैक्षन्त मण्डलानि शिखण्डिनाम् ॥ ४५ ॥
अधावन्त गवां धाराः कोटिशैव पुरोऽजसाम् ।
दुर्वाराः सलिलासाराः श्रावणाम्भोमुचामिव ॥ ४६ ॥
पाण्डरं पाण्डुभिर्नद्धमुख्यमुख्ये द्विधाग्रतः ।
अविन्ददनसो वृन्दं कोटिकुम्भीन्द्रसौभगम् ॥ ४७ ॥
व्रजाम्भोजदृशामङ्गभासामासीच्चमत्कृतिः ।
अनोवृन्देषु तुन्देषु शैलेष्विव तडित्विषाम् ॥ ४८ ॥
रोहिणी च यशोदा च रोहिणीशानिभानने ।
गायन्त्यौ सुतयोः कर्म्म शर्म्मसिन्धौ ममज्जतुः ॥ ४९ ॥
महीधरमहादण्डमण्डितं मुरवैरिणः ।
पिहितार्करजोनीलच्छत्रमादत्त मेदिनी ॥ ५० ॥
आभीरनिकरोत्तानविषाणध्वनिधोरणी ।
अन्तरान्दोलयामास द्विषामपि दिशामपि ॥ ५१ ॥
हम्भाराश्चैव वत्सानां धेनूनामपि हुङ्कृतैः ।
उक्षातिशयहिक्काभिरापुपूरे नभोऽन्तरम् ॥ ५२ ॥
विश्रामन्त्यः प्रतिच्छायं पश्यन्त्यः प्रतिभूरुहम् ।
गृहादपि सुखं वर्त्म मेनिरे व्रजसुभ्रुवः ॥ ५३ ॥

धावन्धावमन्धकारध्वंसिनि मधुरिपुमधुरमुखेन्दोरवलोकनेन लोचनेन्दीवरमेव सानन्दीकर्तुमम्बरमध्यमवलम्बमाने किरणमालिनि संमुखमवगाह्य स्वच्छन्दं हरिमुखचन्द्रमनुपश्यतीव गतिविस्मृतिवशात् , निस्पन्दीभवति मध्यान्हे , मिहिरतनूजावार्यव-

गाह्य निर्वाह्यापि माध्याह्निकमह्नायाह्निकमानह्यापि सबहुबाह्यपटु-शकटकोटिमाटदेव वृन्दाटवीनिकटवटकाननोपकण्ठं स वैकुण्ठो व्रजकण्ठीरवाकुण्ठपरिवारः । यस्मिन्नस्ति हि भाण्डीरो नाम महावटविटपी निखिलपटीयोऽवनीमण्डनीभूतः ।

यस्याधो न पतन्ति वर्षति पयोवाहे पयोबिन्दवो
मूलं न प्रभवन्ति वीक्षितुमहो नक्षत्रमित्रेन्दवः ।
छत्रस्येव दलैरजस्रनिबिडैश्छिन्नस्य विश्रामभू-
र्यच्छाया मरुतोऽभिजुष्टसरितो दूराध्वसंचारिणः ॥ ५४ ॥

असितदलभवच्चतुर्विभागः प्रतिनवपल्लववल्लभोच्चमूर्द्धा ।
अचरमचरमाचलोपमानं प्रतिदिनमञ्चति सन्ध्ययोर्द्वयोर्यः ॥५५॥

यस्तु प्राघुणिकसपर्यापर्याप्तये दिग्दिगन्तसंचारिणोऽनन्तपान्थान्मृदुपवनाद्विधूयमाननवकिसलयपाणिना विहङ्गकलरवैराह्वयन्निव, दलभूरिभारविनामितशिखरतया तानेव प्रणमन्निव, नवकिसलयोपचीयमानशोणतया तेष्वेवानुरागगरिमाणमुद्गिरन्निव, निजनिकटपटुघटमानपुटकिनीवल्लभनन्दिनीलघुतरलहरिविहारहारिणा नानाविधकमलकुलकल्हारकुमुदाटवीपर्यटनश्रमादिव, उपचितमञ्जुकञ्जपुञ्जकिञ्जल्ककल्पबहुसौरभभावगौरवादिव,मन्दं मन्दं हता स्वगन्धैः(?) कृतपुष्पन्धयनिवहेन गन्धवाहेन दरान्दोलीभवद्भिरभिनवपल्लवचारुचामरैस्तानेव वीजयन्निव, निजतलपतितदलौघैस्तेषामेवासनसम्पदं सम्पादयन्निव, निजमुद्भावयति सतां भावम् । अतिविजनतरातिशीतलवितततलवर्त्तिभिरविरलविनिवेशपेशलकिशलयपरंपरं व्याप्तव्योमतया यच्छिर एवावधा-

र्यते व्योम : निजगुरुभारनिर्भरन्यग्भावभुग्नीभवदत्रनिमेवोद्धुमुपचीयमानो जटाकपटप्रकटितकोटिरिव, अविरतविरतविहितविष्णुपदप्रकाशो बहुशोभमानाशिफाव्याजविजृम्भितबहुपातसहस्रपादिव,' करिकरपरिपीवराविरलतरासारस्यूतधरणितलाकाशतलकादम्बिनीमण्डल इव, विगलितजटाभारसमाधिसारमहायोगीव, अविरलदलभूरिभारैर्भङ्गः स्यादिति शङ्कयैवान्तरान्तरानिहितस्थूलस्थूणाभिरिवाविषह्यमानभरभरितवाह्यमानमह्या एव शिक्षानुकूलस्थूलरज्जुभिरिवातिनिविडतरातिस्निग्धच्छायतया शिशिरतरानिलकवलनकुतुकेन प्रतिविटपविलम्बमानाभिरहिपरम्पराभिरिवातिदीर्घकालोद्भूततया द्राघीयसीभिरङ्गरुहराजीभिरिव जटोपजटाभिरभिजटालो वटाऽऽलोकि परमाश्चर्यमिव व्रजलोकैः । हरिः पुनरवलोक्य भाविरभसस्थलमिति जहर्ष, जहास च, निगूढम् । तत एव नातिदूरे निखिलनृगोकुलानन्दावनं वृन्दावनं कालिन्दीनिकटे च, शकटैरर्द्धचन्द्राकृतिं विधाय विदधिरे निर्भियः सुखनिवासमाभीराः ।

महीमूर्त्तेः शम्भोस्तपनतनयाम्भोसितलसद्-
गुरुग्रीवं गोभिर्विहिताहितगाङ्गेयलहरि ।
उदञ्चत्साघीयःशकटघटिताार्द्धेन्दुमुकुटं
बभौ वृन्दारण्यं त्रिभुवनशरण्यं शिर इव ॥ ५६ ॥
अमृतोल्लसनं विष्णुपदोल्लासमलाञ्छनम् ।
सर्वोपरि बभौ वृन्दावनमर्द्धमिवैन्दवम् ॥ ५७ ॥
दूरोद्धूततमोनीतिगोवृन्दैरभिनन्दितम् ।

वृन्दावनतमीशार्द्धमासीन्निशि दिवा समम् ॥ ५८ ॥
हरमूर्द्धस्थितस्यापि विधोः स्पर्द्धां विधास्यति ।
अर्द्धचन्द्राकृतिर्नूनमित्यनोभिरतानि पूः ॥ ५९ ॥
लोकेषु त्रिषु तद्धाम नाम स्पर्द्धेत किं पुरम् ।
प्रारम्भेणैव सम्भूतमर्द्धचन्द्राकृतीह यत् ॥ ६० ॥
मुरारातिपदासङ्गरङ्गोद्धतमिवास्पदम् ।
चम्पकेतुमिषेणोपजहास त्रिजगत्पुरम् ॥ ६१ ॥
कर्त्तव्यानन्तसेवेति द्विखण्डीभूय चन्द्रमाः ।
अनन्ताभिख्ययोरासीद्वसुधानभसोरपि ॥ ६२ ॥
अर्द्धेन्दोर्भङ्गिभाजिप्रकटितशकटस्योद्भटाभिर्घटाभि-
र्वृन्दाटव्युत्कटाभा घटितपटुपदा चित्रमासीत्तदेव ।
कोदण्डं दण्डपाणिर्यदमनुत निजाखण्डदण्डोग्रदण्डं
यत्पण्ड(१)श्चण्डिमाभूद् दुरितभटनटद्भूपुटीभ्रूकुटीनाम् ॥६३॥
वृन्दारण्याभिधाने शकटघटनयैवार्द्धचन्द्रायमाणे
स्थानेप्याशोभमानेन्तरभुवि जलदास्कन्दने नन्दसूनौ ।
भूरेषा भालभूषामकृत मृगमदैः प्राह कश्चित्परस्तु
स्फारभ्रूभित्तिभाजि भ्रमति दृशि भृशं मोक्षलक्ष्म्याः कटाक्षः ६४
सम्बाधः सन्ति गुप्ता ध्रुवमिदमतुलीभूय भावीति लोकाः
स्वर्भूमीशामृतान्धा भ्रमविधुरमपि ज्योतिषामैक्षि चक्रम् ।
भेजुः पञ्चत्वभाजः परमुपरि पुरः पञ्चताभागिभोग्याः
का योग्याः सन्तु वृन्दावननगरतुलां पर्य्युपेतुं नगर्य्यः ॥६५॥

(१) पण्डः=षण्ढः ।

वृन्दावनवृन्दैरानन्दानां घनीभवतः ।
अम्बरमुकुरविलम्बिप्रतिबिम्बं स्वरेव तं ब्रूमः ॥ ६६ ॥
व्रजमहिलामुखचन्द्रान्वृन्दावनभूषु भूरुहान्तरितः ।
ऐक्षत चरमदशायां रभसादिव पद्मिनीरमणः ॥ ६७ ॥
प्रथमं मन्दिरत्रासादिव बहिरासामुदीक्ष्य मुखचन्द्रान् ।
अनुरागारुणबिम्बो दिनमणिरालम्बते स्म चरमाशाम् ॥६८॥

पूर्वं व्यधात्कुमुदिनी विरहोपतापं
पापं तदाप परिपाकमिति प्रतीमः ।
यत्पद्मिनीविरहदावमुखे मिषेण
सन्ध्यारुचेर्ज्वलति चण्डरुचिर्ममज्ज ॥ ६९ ॥

निर्यान्तीभिरिवात्मना सह घनाम्भोजाटवीकान्तिभिः
शोणीभूय सरोजिनीपरिवृढः सार्द्धं प्रतीचीरुचा ।
वारम्वारमुदीक्ष्यमाण इव तां पद्माननां पद्मिनीं
प्रेम्णा मन्थरमद्रिकन्दरतटीमाटत्पटीयानपि ॥ ७० ॥
श्रीवासानन्दकन्दः कमलजजनिभूल्लाससन्दोहसिन्धु-
र्लोकानामेकबन्धुर्निखिलगिलतमोभावपाद्मभावः ।
सद्यो दोषाभिमर्दी स बत परिणतो वारुणीमालम्बे
क्रोधैरन्धेति सन्ध्या ज्वलति धृतवती दुर्द्धरं धाम शोणम् ७१
मन्दीभूतनिजप्रभूतकिरणत्वेनातिमात्रोज्ज्वल-
च्छैलोपान्तहुताशसन्ततिचमत्कारं रविः प्रैक्षत ।
अस्तोर्वीधरगर्भगह्वरवहद्दुर्वारदीर्घीभव-
द्रक्तोग्रद्युतिलक्षभक्षकफणिस्फूर्जन्मणिश्रीः क्षणम् ॥ ७२ ॥

सौवर्णाग्निर्वारुणाशाचरमिहिरकरैः कुत्रचित्कुत्रचिच्च
प्राच्यां नक्षत्ररत्नैः क च तिमिरचितास्फालकल्लोलचक्रः ।
अव्यक्तानन्तमध्यः कचिदपि वसुधाधामसंधानसंधिः
सन्ध्यासिन्धुं समिन्धे जगति किमरं राघवेन्द्रैरलङ्घ्यम् ।७३।
अनुरागिणि मार्त्तण्डे दिगभूदनुरागिणी ।
रागो हि प्रिययोर्योगे दुर्वारः स्यादुद्वयोरपि ॥ ७४ ॥
हा सिन्धौ लोकबन्धौ पतति विधिवशाद्राजनीवाजनि द्राग्
द्वैराज्यं सर्वराज्ये सतनुतनुरुजं सोऽतनुः संतनोति ।
दोषोद्रेकाद्द्विरेफोऽनुभवति कुमुदं भाविदोषाकरश्री
र्यच्चक्षुर्गोचरार्थानपि हरति हटाद् ध्वान्तदुर्दान्तदस्युः ॥७५॥
तुङ्गभूतिभिरभावितमोभिर्ज्योतिरिङ्गणगणैस्समदीपि ।
युक्तमेव तव शीलितदोषाख्यानकालकवलीकृतभानोः ।७६।
गम्भीरैरवगाहितेव जलदैर्ग्रस्तेव कालाहिभि-
र्व्यस्तेव द्विपयूथपैर्निरवधौ मग्नेव मष्यम्बुधौ ।
क्रीडत्क्रोडकुलाकुलेव परितो गूढेव गाढाञ्जनैः
कस्तूरीपरिपूरितेव विदधे ध्वान्तैर्जगन्मण्डली ॥ ७७ ॥
वारुण्याश्रयणोज्जिहानकुयशोभारैरिवाहर्पते-
र्दुर्वारैरुदसार्पिसर्पकलुषाकारान्धकारोत्करैः ।
अन्तर्बद्धमधुव्रतस्य रुदती हुङ्कारकोलाहलै
स्तद् द्रष्टुं द्रुतमक्षमेव पिदधे पद्मेक्षणं पद्मिनी ॥ ७८ ॥
धरणिकुहराद्गर्भाद्दुर्वीभृतां तरुकोटराद्-
बहिरभिययुः खद्योतानां मिषेण मरीचयः ।

अहिततिमिरैरान्दोल्यन्तेऽन्तरावलिभिर्गते
सवितरि परीवाराः प्रायः प्रभूदयसोदयाः ॥ ७९ ॥
सह दिनकृतैवाह्वायाह्वा प्रयातमथोन्मथा
किल कमलिनी यास्यत्येषा द्विषां भयशालिनी ।
इति गुरुतमोवृन्दैः सान्द्रैर्दिशो दश गोपिता
निखिलपदवी रुद्धा क्रुद्धात्मभिर्मुषिता दश ॥ ८० ॥
दुर्वारः कालचौरो दिनमणिमहरघ्नभःप्राङ्गणस्थं
जाग्रत्येवाऽखिलेऽपि स्वपिति सति पुनर्नाद्भुतं नेष्यतीति।
इत्यन्तर्भूतचिन्ता सपदि दश दिशो रोदसीपूरसीम-
द्वाराणि ध्वान्तकूटै रजनिरपिदधे दुर्विपाटैः कपाटैः ॥८१॥
उत्तुङ्गाददिश्रृङ्गात्कमलकुलपतौ दत्तझम्पे पयोधौ
कीलालैरुच्छलद्भिर्नवजलदनिभैर्विश्वमाप्लावि सद्यः ।
ताराखद्योतधाराकपटमणिघटाः कुर्वते पर्वतेऽपि
व्योमान्तर्दिग्दिगन्तेऽप्यतिशयमियता सर्वतो वीथिबन्धम् ८२॥
महाद्रिसानोरिव चण्डभानोः पयोधिपाथःसु बभूव पातः ।
तमोमिषेणेति विशालजालं विधिस्तमुद्धर्त्तुमिव व्यधत्ताम् ८३॥
नीहारास्रैरजस्रं कुवलयनयनप्रान्ततो निष्पतद्भिः-
कोकानां काकुरावैर्बत वियति समुत्क्षिप्य नक्षत्रमालाम् ।
उन्मुक्तध्वान्तधाराघनकचनिचयाच्छादिताङ्गी रुचीना
मस्तं यातेऽधिनाथे विलपति जगतो वार्द्धितास्तोकशोका ८४॥
अभिससार विधुं रजनीवधूस्तिमिरनीलनिचोलमुपेयुषी ।
यदवमोच्य करेण कुतूहली सह तया स चिरं विहरिष्यति ८५॥

अथ सुखमयमेव यामवतीमतीत्य प्राचीमुखचुम्बिनि मरीचि-मालिबिम्बे हरिबिम्बाधरमधुराविकस्वरार्द्धभणितिमधुमाधुरीजल-धिकृतविनोदयोर्नन्दयशोदयोर्न केवलं दिनमुखमेव सुप्रभातमपि तु जन्मकर्म्मधर्म्मशर्म्माणि मर्म्माणि नर्माण्यपि सुप्रभातानि जातानि। निरवधिनिखिलानन्दयशोदानन्दनरोहिणीनन्दनयोर-तत्त्वविज्ञानामाभीराणामाज्ञामनुपालयतोः कदाचिदुपहरणमदूरव-र्त्तिनामेव सलिलपानभोजनादिभाजनानां, त्रिभुवनमूर्द्धन्ययोरपि, क्वचिदपि मूर्द्धन्येवोद्वहनमहह किरीटानामिव पीठपरिमाणपादुका-दीनाम्; क्वचिदपि समये गिरामगोचरयोरपि प्रकृतीनामेव गोच-रीकरणं गोचारिणामेव सहचारिणीतः; वागधीशयोरपि वा-चामेव कदाचिदभ्यसनम्, गोलोकपालकयोरपि क्वचिदपि गवामेव परिपालनपरिचर्याकलनमादराद्दीर्घम् , एवंविधविविधकैशो-रानुकृतिविहारसम्पदो बहुवेलं बहुधैवोदपद्यन्त ।

वात्सानां बन्धमोक्षं निभृतमसमये कुर्वतोर्बालकानां
निद्राणानान्तु निद्राविघटनमभितः क्रीडतां ताडनानि ।
चातुर्य्यं चौर्यचर्याचितमुपचरतोश्छिक्यभाण्डस्थितानां
कौमार्य्यं दुर्निवार्य्यं हरिहलधरयोरासीदसीम ॥ ८६ ॥

भग्नं भग्नमहार्यहारि भवनाभिर्गम्यते गम्यते
भुक्तं भुक्तमताड्यताडि पुनरप्यावृत्यते वृत्यते ।
नीतं नीतममोच्यमोचि हरिणैवाकार्यकारीत्यभू-
त्कौमार्येषु हरेरहर्निशमसौ वाग्विभ्रमः सुभ्रुवाम् ॥ ८७ ॥

अनतिदीर्घेणैव कालेन मदकलकलभाविव दुर्विभाव्यप्रभावौ

द्वावप्याभीरकिशोरपरम्पराभिः सह नगरानातिदूर एव चारया-ञ्चक्रतुरौत्सुक्येन कतिचन वत्सान् ।

ललाटनटितालकं रटितकिङ्किणीजालकं
नवीनपशुपालकं सवनमालकं बालकम् ।
झणञ्झणितनूपुरं लसितगोपुरं तं पुरः
स्ववत्समनुगामिनं कलयति स्म नन्दः कृती ॥ ८८ ॥

प्रतिदिनमपि प्रातः प्रातः प्रियप्रियचुम्बनै-
र्मधुरमधुरास्निग्धस्निग्धोक्तिभिः प्रतिबोधितः ।
हरिरथ समं भ्रात्रा मात्रा पयो दधि भोजितः
सह शिशुगणैर्वत्सानुत्साहितः समचारयत् ॥ ८९ ॥

मधुरमुरलीशृङ्गोत्सङ्गः सवेत्रकराम्बुजो
लघुललितया घस्या कट्यां त्रिधा परिवेष्टितः ।
अलिकफलिके गौरं गोरोचनाकणभूषणं
दधदहरत स्वान्तं शान्तं हठादपि योगिनाम् ॥९०॥

मृदुचरणयोः शिञ्जन्मञ्जीरयोर्मणिघर्घर-
ध्वनिनि जघने हारस्फारप्रभाजुषि वक्षसि ।
पथि विहरतोर्वत्सैरच्छैः क्षणं पतदीक्षणं
चिरमनिमिषं तस्थौ सुस्थौकसीव गृही जनः ॥ ९१ ॥

सुपटु घटयन्वत्सान्स्वच्छाङ्कुरे नवशाद्वले
स्वयमनुचरन्कच्छे कच्छे समुत्सुकमानसः ।
चिरमुपगतः स्निग्धच्छायास्थली सहली हरि
र्व्यहरदमितैराभीराणामभीः शिशुभिः सह ॥ ९२ ॥

वेणुं वादयतः कदापि नटतः शिञ्जानमञ्जीरकं
सानन्दं क्षिपतश्च कन्दुकमथोद्धर्तुं पुनर्धावतः ।
बालैः कृत्रिमवत्सरूपरुचिरैः सार्द्धं हरेः क्रीडतो
वत्सीभूय पुरो बभूव दनुभूर्वत्सैः(१) समं मत्सरः ॥९३॥

सकलसुरासुरभयंकरं तमसुरं वधाय साधारणवत्सरूपधारिणं हलधरमवलोकयन्मधुसूदनः पुनरिदमभाणीत् ।

अहो पश्य बलदेव–

वलति सविधे मन्दं मन्दं गवां शिशुताभुवां
चकितचकितं चक्षुर्दिक्षु क्षिपन्नपि वीक्षते ।
तृणमपि मुदादत्ते धत्ते रदैः स्वदते मदै–
र्न खलु तुलितो वत्सैर्वत्सासुरोऽयमुदीर्य्यते ॥ ९४ ॥

दृशतरलितैर्लाङ्गूलाग्रैर्द्वयोरपि पार्श्वयो–
स्तनुमनुवलद्ग्रीथीबन्धां व्यपोहति मक्षिकाम् ।
विरचितवपुर्दंशं दंशं निराकुरुते द्रुतो–
द्वलितवदनावातैः कण्डूयते च रदाङ्कुरैः ॥ ९५ ॥

निपतति हठादङ्गे यस्मिन्मनागपि मक्षिका
चलति तरसा वारं वारं तदेव न चापरम् ।
अहह महती माया मायापशोरवधीयतां
सह पशुगणै रोमन्थानां विधीनधितन्वतः ॥ ९६ ॥

अहो समुचितमेवास्य बलदेवातिशिशुत्वं गोत्वं च । यदिह जानतोऽप्यजानत इवानूभूयते वृत्तिः ।

---

(१) वत्सासुरकथा भा० १० स्कं० ११ अध्याये ।

साक्षादैक्षत पूतनापरिभवं वेश्येव वार्त्तां तृणा-
वर्त्तस्यापि निवर्त्तते न तदपि व्यापारभारादतः ।
को बालादपरः कृशानुकुहरक्रोडे करं न्यस्यति
प्रत्यक्षीकृतमाशु विस्मरति वा को नाम गोभ्यः परः ॥१७॥

भवतु नामाचिरेणैव फलमाप्स्यति चतुष्पाद्‌मायानां खलानां खलु । तथा हि मायादशायामपि तापसस्वभाव पुनरपरिहार्य एव ।

कालः काक इवायं भवति न केषां भयङ्कराकारः ।
यस्मिन्नुदयति दृष्टिर्जलद इवोल्कामयीदृष्टिः ॥ १८ ॥

कुलटाकुटिलकचाधिकमेचकाकारतया त्रिभुवनसंहारकारणं तम इव, तम इव मरीचिमालिमरीचिमालया दिगालयात्परिभूय परिपातितं धरणिमण्डलेषु । एतस्य बालैरपि कालभुजङ्गमसंभ्रमं तनुते । निविडमषीमलीमसत्विषि वपुषि चान्तरन्तरा शोणच्छविपरम्परा अतिशयसान्द्रधूमच्छन्दोपरिपरिवालितहुताशहेतय इव, अहह निरन्तरमन्तरापूर्यदुर्वायाभोगतया बहिर्निर्यद्रोषहुताशनोत्तुङ्गस्फुलिङ्गा इवानुभूयन्ते । यस्य चत्वारस्तु चरणाश्चतुर्णामपि धर्म्मार्थकाममोक्षनाम्नामुपधीनामामूलमथनमन्दरमन्थानदण्डानां चण्डिमानमावहन्ति, घनतिमिरनिरोध्यमानोडुचन्द्रपादा इवादावेव विडम्बनाय विधिना वितीर्णमषीपूर्णचूर्णानीव पदाकारेषु सान्द्राणीव लक्ष्माणि लक्ष्यन्ते ।

अहो तिष्ठतु क्षणं, विहरिष्यावः ।

उन्मीलद्वलकम्बलौ कुथपरीतत्वात्तथा लोमशौ
दोःपादेन चतुष्पदौ दलभवैः शृङ्गैः सशृङ्गावपि ।

श्रीरामश्च हरिश्च लम्बितकटीचञ्चद्धटीबालधी (१)
नर्दन्तौ वृषभाविवासवृषभाकारौ प्रचिक्रीडतुः ॥ ९९ ॥
चक्रतुस्तौ नरक्रीडां दधुर्व्रीडां दिवौकसः ।
व्यसनानि प्रभूणां हि परिवारस्य मूढये ॥ १०० ॥

हरिरिति विहरन्नेव करिवर इव करलीलया सह कन्दुकेन परचरणावुपगृह्य पर्यवधूय च्छागशावकवत्समिव वत्सासुरमुत्सारयन् मायाफलमालोकयामास कपित्थतरुमौलौ । स खलु केवलमेक एव चूर्णतां भेजे । निजबलगरिमाणमादेवलोकमालोकयन्निव निपतनसमकालमेव तानपि चूर्णयाञ्चक्रे ।

अथ निपपात देवतारातिरवनिरुहमूर्द्धनि ध्वनिभरमुखरितहरिदाकाशमण्डलः । कंसः पुनरात्मन एव शिरसि कटु कठोरशतकोटिकोटिपतनमाभिशशङ्के मूर्छित इवास बहुकालं च ।

आभीरार्भकनिवहास्तु तदवधाय व्याधूय च मुहुर्मुहुर्मूर्द्धानं प्रशशंसुरवतंसममराणाम् ।

अमराः पुनरमिततरप्रमोदमेदुरा दुरापसुरनगरनवप्रसूनविसरैरानन्दाश्रुपूरैरिव द्रुतमवाकिरन्ति स्म ।

अथ कदाचिदनुचारयन्तः प्रचुरपशुकिशोरानुपचितजलपानवासनाभिः सह रामकेशवाभ्यामाभीरनन्दना अरविन्द[नन्द] नन्दिनीजलमवगाह्य परिपाय्यापः पशूनपि स्वयमपि निपीतवन्तो विहरन्तो विचरन्तोऽपि नातिदूरे विहितसमाधिमिवार्धमुद्रितनयनमारभ्यैकचरणव्रतमिव संवृत्तैकचरणचरणावलम्बिधरणितलम्,

(१) बालधिः केशवल्लाङ्गूलम् ।

ध्यानानन्दवशीकृतमिव निस्पन्दमानम् , आरब्धयोगाभ्यासमिव ऋजुस्थिरीभवदुन्नतग्रीवम्, तपःप्रभावाविर्भूतप्रभूतसत्त्वगुणमिव बहलधवलिमानमावहमानम् , निर्धूतकलुषतया प्रत्यवयवं बहिर्भवत्तेजोङ्कुरप्ररोहैरिव देहरुहैरुज्जिहानबहुमाहिमानम्, अतिदयालुतयेवाङ्गोत्तरङ्गरुरुपतङ्गादिकमप्यनुद्वेजयन्तं गुरुगरिमतुङ्गिमातिवलक्षिमपक्षद्वयद्राघिमदर्शितकैलासप्रातिपक्ष्यम्, पक्षद्वयलभ्यमानविलक्षणलक्ष्मीकतयाऽभिख्यातिख्यातमपि किरणलक्ष्माणमपि क्षामयन्तं लक्ष्मीरमणचरणकिणाङ्कैरुपलक्षितपार्श्वद्वयपक्षीन्द्रमिव सितेतरद्विरेपत्रातिचित्रितपार्श्वद्वयीदीप्यमानं गुरुविरहविधूयमानतया मुरमथनमुदीक्षितुं साक्षाद्भगवन्तमिव पन्नगाधीशं, नगाधीशमिवान्तःकठिनगुरुसारं, सारस्वतश्रियाभिराममपि परमतपोरूपं, रूपं परमिव कृतान्तस्यातिदुर्दान्तं, दान्तमिव मिहिरमयूखातिविधुरमपि हरिमात्मनैवमीक्षमाणं क्षमानद्धपदमपि, दिविष्ठातिकष्टानुष्ठानपरिनिष्ठं निष्ठुरं बकनामानमसुरं मायाकलितब-(१)कपक्षिलक्षणं हरन्तमिवेक्षणं समैक्षन्त ।

तदवकलनकौतूहलतरलतया तदन्तिक एव विहरत्स्वाभीरकिशोरेषु निजसोदराशोकजातवेदसामुपशान्तये जडधियेव मत्स्यावतारोऽप्यस्यैवेति स्वभक्ष्यत्वेनोद्भावयन्निव नवजलधरश्यामधामानमतिसाहसोपशोभमानं यशोदाकिशोरमेवाग्रसीदुग्रशीलोऽयम् ।

---

(१) बकासुरवधकथा भा० १० स्कं० ११ अध्याये ।

(१)स त्रोटिकोटौ स्वकटौ निधाय प्रयातुमुड्डीय विचारयन्तम् ।
बकं बकीमाणरसोपलम्भाद्विश्वम्भरात्मा स्थगयांबभूव ॥१०१॥

कैटभारिरुदभाद्बकासुरत्रोटिकोटिघटितः क्षणं हठात् ।
चन्द्रचूडशिखरीन्द्रशेखरीभूतनीरधरनीतिभाक्प्रभुः॥१०२॥

अथ कोटिशीतकिरणशीतलाकारमपि दवदहनमिवानलोदरमेव दहन्तं स पुनरचिरादेव देवाधिदेवं हरिमुद्गिरति स्म ।

अथाग्रे यः स्वाग्रे सुरनरसमग्रेशमसुरः-
समुद्वीक्ष्योद्ग्रीवप्रकटितकटित्रोटिविकटः ।
व्यधात्तुण्डाघाताद्धरिवपुषि घातानपि मुधा
क्रुधान्धो दम्भोलाविव दलहतारम्भनिवहान् ॥ १०३ ॥

निजमुण्डे चण्डाहतिव्यथिततुण्डतयापिण्डीभूतं भूतद्रुहमवधाय माधवस्तमादाय खे लसद्विविपदोभिहर्षयन्खेलितुमैच्छदखेदोऽयम् ।

अधोन्यञ्चन्मूर्धाकरकमलरुद्धामलगलः
खलः खेलास्वोद्यन्नरचरमभागोऽसुरबकः ।
सुरारातेरासीदहह चिरमाशीलितलस-
न्महाकन्दोदञ्चाद्विसविशदतुन्दोदज(२)रुचिः ॥ १०४ ॥

कुञ्चच्चञ्चुपुटग्रीवः श्रीवल्लभकराम्बुजे ।
प्रपञ्चं पाञ्चजन्यस्य वञ्चयामास गोभिया ॥ १०५ ॥

ग्रीवादण्डे गृहीतः समसमयचतुःपार्श्वविस्फारपक्षं

---

( १ ) त्रोटिश्चञ्चुः ।
( २ ) उदजः पशुप्रेरणम् ।

सान्द्रोदश्चत्सुधारुग्धवलिमगमनव्यापिपश्चाद्विभागः ।
आभीरेन्द्रत्वमाशोभयदुपरिवहन्पाण्डरच्छत्रलक्ष्मी-
मक्षीणक्रौञ्चमायाधरविबुधरिपुस्तस्यपक्षीन्द्रकेतोः ॥ १०६ ॥

हरिणोद्भ्रामितस्योच्चैः पक्षास्तस्य दिशो दश ।
मयूखा इव पीयूषमयूखस्य जगाहिरे ॥ १०७ ॥

प्रोड्डीय केऽपि तनुतस्तनवो वलक्षाः
पक्षाः क्षणाद्विविशुरेव दिशोन्तरिक्षम् ।
उद्भ्रामितस्य रभसान्मधुसूदनेन
तारा इव प्रबलकायबकासुरस्य ॥ १०८ ॥

उड्डीनैर्गरुतां गणैर्बकतनोर्धावलयधारा:घनैः
क्षुभ्यत्क्षीरसमुद्रसान्द्रलहरीस्पर्द्धाधरैर्दुर्द्धरैः ।
नृत्यद्धूर्जटिमूर्द्धनिर्धुतधुनीप्रोत्तुङ्गभङ्गायितैः
संभारैरिव कैटभारियशसः शुभ्रीकृता रोदसी ॥ १०९ ॥

हरिरपि करिकरभलीलया पटुबहुलकटुचञ्चुपुटाविभाग-कपटभणिताद्विधाकरणक्रमेणैव कोमलकमलमृणालीमिव दक्षिणेतराभ्यामपि कराभ्यामूर्द्धाधोऽवस्थिते त्रोटी दधदेव त्रुटिलवलघुनैव कालेन द्विफालीचकार मायाबकस्य तनुवल्लीम् ।

सङ्गरप्राङ्गणेऽधावि धारया रक्तपक्षयोः ।
बकदेहाद्बकारातेः कीर्त्येवोद्यत्प्रतापया ॥ ११० ॥

द्विधाभूय हरेः पाणौ द्वयोरपि च लोकयोः ।
बकोऽभूदबको दूरादधश्चोर्ध्वं च पश्यतोः ॥ १११ ॥

अराजन्त मुरारातेरुरसोऽन्तरसृक्कणाः ।

नवोदितपयोवाहे नवीनार्कच्छटा इव ॥ ११२ ॥

अमृतं मा बकी भुङ्क्ते मां विहायेति मत्सरः ।
जहौ स्वयमिव प्राणान्हरिपाणौ बकासुरः ॥ ११३ ॥

बकासुरवपुः पाण्डुरक्तैराक्तमन्तरा ।
शुभ्रमभ्रमिवादभ्रतडिद्धारैरशोभत ॥ ११४ ॥

विदीर्णास्यवहद्रक्तैरारक्तो बकविग्रहः ।
गैरिकैरिव नीहारशिखरी समरोचत ॥ ११५ ॥

अम्बरतलमवलम्ब्य देवतानिकुरम्बं हरेरुपरि कुसुमकदम्बकं ववर्ष हर्षेण ।

अभयं धाम तद्वीक्ष्य विह्वलानि भियामराः ।
अर्पयन्त इवावर्षन्मनांसि सुमनोमिषात् ॥ ११६ ॥

तुन्दिलबकरुधिरबिन्दुभिः केवलप्रवालैरिव भूषितस्य कैटभारातेर्वपुरन्तरान्तरामुक्ताभिरिव नन्दनवनदरदलितमल्लिकाभिराभूषयांचक्रे ।

लोलं कोलाहलेन प्रथममथ बकक्रीडनानीति सद्यो
ध्यायन्संदिग्धमुग्धं दनुज इति पुनर्दीप्यमुड्डीनमन्तः ।
अन्धः संभावनेऽभून्मुहुरपि पततां धावतां वत्स वत्से-
त्याक्रन्दद्बल्लवानां मधुमथनमुखं वीक्ष्य को वद कीदृक् ११७

अभ्युत्थानं प्रकुर्वन्नुषसि विरचयन्सर्वतो गोप्रचारं
पद्मानन्दैककन्दः शुचिरुचिरकरासङ्गराजद्रथाङ्गः ।
प्रोद्यन्नुच्चैस्तमोहा परमहिमरुचिः स्फीतपीताम्बरश्री
र्यातानन्ताभिसङ्गो हरिरपि च हरिर्भेजतुर्मित्रभावम् ।११८।

शृङ्गध्वानैः प्रबोध्य व्रजशिशुमुषसि द्राक्समादाय वत्सा-
न्वात्सल्याद्वत्सलाभिः श्रुतिघटितपटुप्रेष्ठभूयिष्ठभक्षः ।
शिञ्जन्मञ्जीरमोदद्विगुणितचरणान्दोलकृत्यं प्रनृत्य-
न्सार्धं गोपालबालैर्व्यचरदुपवनं बालगोपालवेषः ॥११९॥
दैत्यारेः केलिपात्राण्यकृत तरुमृगीभेकडिम्भान्विहङ्ग-
स्वाङ्गच्छायात्रिभङ्गीप्रतिरवनिहान्कृत्रिमान् गोतुरङ्गान् ॥
क्षिप्तस्योत्क्षेपधाराः परमसुखपदं कस्यचिद्वस्तुनोदः
कैशोराणामसाम्यं तदिह न जगतीमूर्ध्नि किञ्चित्प्रतीमः॥१२०
अहमहमिकयापि शिशुः प्राप न योगी हृदापि बहुयोगैः ।
सुलभः प्रभुरपि सुलभादपिदुर्लभतोऽतिदुर्लभः समये॥१२१॥
(१)अथाघो नामाघ्र प्रतिनिधिरमोघप्रतिनिधि-
र्बकानृण्यं वाञ्छन्नलदजगराकारगरिमा ॥
बहुक्रोशव्यापी गिरिरिव बभौ पीवरवपु—
र्नवं प्राचीनं वा मुनिरपि न बोद्धुं प्रभुरभूत् ॥ १२२ ॥
रुन्धानः शिरसाब्जबन्धुमधिकव्यात्ताननत्वाद्द्विधा
व्योमोर्वीमपि तामसीमिव हठात्कुर्वन्दिवा रोदसीम् ॥
दुर्वारस्फुरदुग्रफूत्कृतिमरुत्क्ष्वेडाम्बुवर्षोल्बणो
वर्षाकालमकाल एव विदधे घोराघनाघोरगः ॥ १२३ ॥
बिभ्राणे भूरि गर्भे विषमतिकठिनव्यग्रजिह्वाग्रभाग —
प्रोद्यद्विद्युद्विलासः प्रकटितरदनव्यूहवेल्लद्बलाकः ।
चक्षुर्निर्घोषघोराशनिरतनुचलत्सृक्कशक्रायुधोग्रः

(१) अघासुरकथा भा० १० स्क० १२ अध्याये ।

कोटेनिर्वासय विश्वं घनतमतमसामास घोराघमेघः ॥१२४॥

वलच्छोकः कोकः स्फुटमजनिलोकश्च किमिति-
प्रमादं प्राङ्मेने दिविषदपि दुद्राव तरतः ॥
समाक्रान्तं विश्वम्भरभरणानिःसम्भ्रमवशा-
दघेनाघेनेव व्यथितमिदमासीजगदपि ॥ १२५ ॥

अकस्मात्पिदधे व्योम ससोमार्कमघासुरः ॥
पयोधौ पतनं मेने मनीषीव मनीषयन् ॥ १२६ ॥

अथ तदाकारत्रिभुवनजनितचमत्कारघनफूत्कारवारमारुतप्रसारिताविषविषमतरासारसम्भारतया गुरुगरिमगभीरभीमनिःसीमतिमिरगर्भोपगूढव्योमतया दुर्दिनमनुवर्ण्य दुद्रुवुर्द्रुतमेव ग्रामाभिमुखमाभीरकुमाराः। तदाननोदरदरीद्वारं नगरद्वारं मिवावगाह्य नगरमिव तदुदरमेवौको जगाहिरे गोवत्सलगोपवत्सगोवत्सा ।

हरिरघमवधाय धावतोऽपि धेनुजघनमादाय सुदामश्रीदामसुबलस्तोककृष्णप्रभृत्याभीरकुमारजविहारपरिषदो धावन्नेवाहंपूर्वमहंपूर्वमित्यहमहमिकयेव तानेव स्पृशन्नपि सपदि जगाहे तदुदरगुहागर्भम् ।

यन्नामाप्यघमर्दनं वितनुते किन्नाम चित्रं महत्—
तेनाघो विनिपात्यते परमघस्योच्चैस्तपो वर्ण्यते ।
योगीन्द्रस्य मनोप्यणोरणुतरः सञ्जाहते वा न वा
यो गर्भेऽपि निविश्य कैटभरिपुः सोऽभूद्गरीयान्गुरोः १२७

अथ प्रख्यापनक्षीणतमाघोऽयमघासुरः ।

तमितीवानुजग्राह स्वयमन्तर्गतो हरिः ॥ १२८ ॥

हरिणान्तर्गतं तस्य तेनाप्यन्तर्गतं हरेः ।
अद्वन्द्वं हि द्वयोरेव समं त्र्ययदपेक्ष्यते ॥ १२९ ॥

तमःश्रीरप्युच्चैरपचिततमःश्रीः समुदभू-
दघान्तर्मग्नोऽपि प्रभुरनघ एव त्रिभुवने ॥
कृताभीरासङ्गोऽप्यविरतमसङ्गः किमपरं
सदा शुद्धो मुक्तस्तदुदरनिरुद्धोऽपि निभृतम् ॥ १३० ॥

तमस्तन्वन्सुगम्भीरमभ्यमारीदघासुरः ।
कुलटा मोक्षलक्ष्मीस्तं तमस्यस्तंगते दिवा ॥ १३१ ॥

भगवति गरुडध्वजे गतवति निभृतमघासुराजगरोदरं घनतिमिरपरीतदरीविजिहीर्षयेव सपदि भयतः प्रपलाप्यमानैः पञ्चभिरसुभिरपीन्द्रियैः पञ्चभिर्महाभूतैस्सात्ममनोभिरसुरभोगिनो गुरुभोगभित्तिभेदं विधाय बहिर्निर्यद्भिरुपदर्शितवर्त्मना शनैःशनैरजगरजरठकठोरहालाहलज्वालाकुलकवलनाविकलतया परेता एव पूर्वं तदनु दनुजारिदर्शनसुधाभिवर्षणैरपि जीविता भूयो

वत्सा अपि वत्सपाला अपि स्वेच्छाचारपरायणा अशरणशरणबलनारायणानुसरणा गिरिविवरकोटिदरीद्वारवाटतः समुदयगिरिगभीरगह्वरविहरदुडुपरिवृढकिरणपरम्परा इव गिरिगर्भनिर्भरभ्रमद्भागीरथीझङ्कारमुखरजलवीचय इवान्वधावन्त बहिरध्वानम् ।

अघात्मा सोऽद्य मेदस्वी पलायितुमिवाक्षमः ।
तमालोक्य तमःपुञ्जं तत्रैव समलीयत ॥ १३२ ॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये चतुर्थोऽयमुल्लासः ४

# अथ पञ्चम उल्लासः ।

अथ पशुपकिशोराः परस्परं मुखमीक्षमाणा विस्मयानापुरापुरपि पुरुहूतावरजन्मानमलौकिककर्म्माणम् । अथ प्रभातसमयावधि बहुधा बहुधावितमनुचटुटूद्भटवत्सलमनूपवनकच्छं क्रीडितमपि बहुधैव, कथमपि शमनमुखादिव विकटसंकटादाभिरक्षितैः सम्प्रतिविषमबुभुक्षाक्षामैरस्माभिरपेक्ष्यते क्षेमम् । तदितो द्रुतमनुविन्दतु कालिन्दीपुलिनमलिन्दमिवानिन्द्यं गोविन्दः सह गोवृन्दैरमन्दपारिणाहम् ।

किमात्मनो वर्णयिष्यामः, क्षामतमं तव वपुरालक्ष्यैव श्यामधामाभिराममिदमहह वयं सुदूरपराहता एव ।

यदिदम्—

पदं ते मञ्जीरध्वनिषु तनुते मान्द्यमधुना
हठाद्गाढं बद्धामपि पटुघटीमुज्झति कटी ।
वचो वक्त्रादूर्ध्वं बहिरुदयते नार्द्धमवशं
द्रवत्प्रायः कायः स्फुरति निरपायः क्षुधि हरे ॥ १ ॥

न व्याहारविहारयोर्न शयने नाप्यासने नाञ्चने
नालङ्कारनिकारयोर्न भवने नो वा वने निर्वृतिः ॥
सिक्तस्यापि सुधारसेन शतधास्तोत्रस्तुस्यापि चेदुन्मीलत्यवलीभवत्तनुधियो धैर्यच्छिदैकक्षुधा ॥ २ ॥

हरिरभितो विलोक्य त्रैलोक्यमुकुटमणिमिवाम्बरमणिमम्बरमध्यमध्यासीनं भगवन्तमुदीक्ष्य समाचचक्षे कृतात्मक्षेमम् ।

मध्यमण्डितचण्डांशुदृश्यतरमभूदिदम् ।

ज्वलता वीतिहोत्रेण महाकुण्डमिवाम्बरम् ॥ ३ ॥

अथ सकलवत्सवत्सपालानुकूलं यमुनाकूल एव नवकिसलयकमनीकस्निग्धच्छायोच्छ्रितततरुगततरूत्करमूलं मृदुगतिमहनीयहंसकामिनीकलरवकोलाहललोभनीयपरिपार्श्वं कूजमधुरतराडम्बरकारण्डवाकीर्णं समुदितमुदितामितरचक्रवाकरचितचक्रवालं दात्यूहव्यूहविहितबहलकलकलितबहुकौतुहलाभोगं मदकलकलविङ्कनिरातङ्कझङ्कारमुखरमहीरुहशिखरं सरसकोमलविमलतमातिस्वच्छवालुकाविसरं क्वचिदुपचितनवनीरवाहखण्डमण्डितं क्वचिदपि चाखण्डोदयदुडुनिकरनिकामवलयितमम्बरवलयमिवाविशदविशदकोकनदच्छविनिविडं सरोजराजिराजितं सर इव बहुविधलक्ष्यलक्ष्मीविलक्षणीभूतमनोभूफलकमिव सुविपुलपुलिनपदं मूर्त्तिमतीं मुदमिवालुलोके, सत्वरमुपगत्येदमाचचक्षे च ।

काळिन्दीचन्द्रहासं च पुलिनाभेद्यचर्म्म च ।
जित्वा जगदयं धर्म्मो द्वयमेव जहाविव ॥ ४ ॥

खलश्रेणीकोलाहलकलितकाञ्चीकलकलो
मिलद्वीचीभासोल्लसितसितवासोवलयितः ।
पदाङ्कैः कोकानां प्रियनखरलेखोपखचितो
नितम्बः कालिन्द्याः पुलिनमिदमिन्दीवरादृशः ॥ ५ ॥

क्वचित्कूर्म्ममुखोन्मेषमुखरीभूतबुद्बुदम् ।
क्वचिन्मत्स्योच्छलत्पुच्छं भात्युच्छ्रं यमुनापयः ॥ ६ ॥

हिण्डीरस्फुरत्पुण्डरीकपटलीपाण्डुः क्वचित्कुत्रचिन्माद्यन्मुग्धमरालमण्डलपटुप्रारब्धकोलाहला ।

धावद्धीवरभीरुपीवरदु(१)लीवाचालवीचीकुला
कुत्रापि क्वचिदप्युदेति यमुना पाठीनझंपाकुला ॥ ७ ॥

अथ भोक्तुमनाः करिवरकरभ इवातिकूतूहली पुलिनवररमध्यमध्युवास वासुदेवः पशुपकिशोरैरलंकृतः परितः ।

सालताल इव कल्पपलाशी केशवः सपरिवेषशशीव ।
अन्तरे व्रजकिशोरगरीयोमण्डलस्य विनिविश्य बभासे॥८॥

आवृत्योल्लसितं विराजदलकैर्गोपालकैर्बालकैः
कालिन्दीपुलिने कलिन्दतनयाकल्लोलकल्पं महः ॥
भूवक्षःपदकाख्यभूषण इवान्तर्भासि नीलोपलं—
रत्नैर्द्वीपमिवाद्रिभिर्क्ष्यरुचिरैरम्भोभिरम्भोनिधेः ॥ ९ ॥

मध्योद्यन्माधवाकारमाभीरशिशुमण्डलम् ।
अपश्यदपरश्रेणी पूर्णचन्द्रमिवापरम् ॥ १० ॥

हरिपरिमण्डितमध्यं मण्डलमाभीरजैर्बद्धम् ।
ज्योतिश्चक्रमिवासीन्मेढ्रीभूतध्रुवं वियति ॥ ११ ॥

वत्सपैर्मण्डलीभूय मण्डितो यदुनन्दनः ।
द्वीपशैल इवाशीलि केसराचलमण्डलैः ॥ १२ ॥

मात्रा दत्ते प्रयत्नादमृत इव दधिक्षीरहैयङ्गवीने
खण्डापीने नवीने यदपि च लुचिवीरोटिपूर्यैकचौर्यैः ।
आभीराणां शिशुभ्यो विदितरुचि ददे सस्वदे वासुदेवो
यन्माधुर्यादिवान्धः क नु पशुभिरितं तेषु ते कोऽपि वेद १३॥

उदञ्चति कचोरिका मधुरिका मनश्चोरिका

(१) दुली कमठी ।

सुधारसपुरी पुरी न लुचिवी समोर्वीतले ।
हरेर्हरिणचोलनः हरिणहीनचन्द्रानन-
त्रपोषितसुधानिधिः सुमधुवाटिका रोटिका ॥ १४ ॥

तमोरुचिविधुरन्धरे हरिकरे विगाढान्तरे--
विधुप्रतिनिभिर्दधि द्रुतमभाणि गोपार्भकैः ।
अघासुरविघातनोद्भटवनान्तरोद्भावनां
श्रमाच्छिदिरमाधवोऽरमत दध्नि धुन्वाङ्घ्रिरः ॥ १५ ॥

मिष्टं मिष्टमिदं गृहाण न मुदं भजे मनस्त्वा विना—
भोक्तुं वल्लवबालवल्लभवहन्नेवं वचोवैभवम् ।
तस्यार्धं विततार वत्सपगणस्त्रैलोक्यमुत्कम्पयन्
न म्लानेन मुखेन पाणिकमले जग्राह नारायणः ॥ १६ ॥

माधवेन पुरतः प्रसारिते हन्त दक्षिणकरे तदर्थिनः ।
हासयन्त उपहासकौशलैः केऽपि केऽपि शतधाप्यवञ्चयन् १७॥

(१)कुत्राघोपरमः क भोजनविधिस्स्तोकैः समं प्राकृतै-
रित्यादिश्य विधिर्विरुद्धहृदयो बोद्धुं व्यतानीद्धियम् ।
तादृङ्मण्डलमध्यमण्डितममुं सा धीस्त्वसाधीयसी-
स्तम्बालीन्नृतमन्वभून्न हठतो वैकुण्ठकण्ठीरवम् ॥ १८ ॥

तां मायामतनोत्प्रमातुमुदधौ जालैकफालीमिव
भ्रातः साहसकौशलं हतविधेः कस्मै किमाचक्ष्महे ॥
तद्वत्सानहरद्धठेन कपटी तुच्छोऽपि सन्स्वेच्छया
वत्साघातिशयोच्छलन्मदमहामायीन्द्रमायाच्छिदः ॥ १९ ॥

(१) विधिकृतवत्सापहरणं भा० १० स्कं० १३ अध्याये ।

भूमावेकं निधाय द्विगुणघनमिळद्भुग्नजंघोरुजानु
प्रोद्दाम्यापि द्वितीयं पदमवनितलादुबद्धवीराधिवासः ।
वेत्रं वेणुं विषाणं तनपटपुटितं पृष्ठपार्श्वद्वयान्त-
र्बिभ्राणो वामपाणिप्रणिहितकवलं दक्षहस्तेन भुङ्क्ते ॥२०॥
वेत्रं वेणुमथो विषाणमदधत्पृष्ठे च पार्श्वद्वये
क्षुत्सेनामभिजेतुमायुधमिव त्रेधा क्रुधा माधवः ।
तद्व्यालीढमतेः क्षणं यदुपतेर्लब्धान्तरं प्राग्विधि-
र्यद्वत्सानहरन्स गोपतिरिति ख्यातस्त्रिलोक्यामभूत् ॥२१॥
अनालोचितगोवत्सा वत्सपाः कच्छपा इव ।
कण्ठमाकुण्ठयामासुश्चण्डदण्डहता इव ॥ २२ ॥
अहो वत्सा न लप्स्यन्ते मोक्ष्यन्ते किन्नु मद्विधाः ।
एहि कृष्ण ! विधास्यन्ते गवामेव गवेषणम् ॥ २३ ॥
यदि वत्सा न लप्स्यन्ते नोत्पत्स्यन्ते किमाधयः ।
पुरः किमाभिधेयं वा तदाम्बातातयोरपि ॥ २४ ॥
अशनं मुञ्चतो वीक्ष्य किशोरानाशु केशवः ।
दयार्द्रो वारयामास मया गतमिति ब्रुवन् ॥ २५ ॥
निवार्य तानार्यतमः समस्तान्हस्तारविन्दे कवलं दधानः ।
तथैव वामे स यथा गृहीतं जगाम गामेव गवेषमाणः॥२६॥
क्वासीद्रोटी क्व वेत्रं क्व नु बत कवलः क्वावतंसः क्व वंशी
कुत्रांसादुत्तरीयांशुकमशनरसः कुत्र वा कुत्र हासः ।
अक्षिभ्यां नैक्षि नाबोधि च बत वपुषा चेतसालक्षि नो वा
धन्यानां धेनुजार्थे प्रतिधरणिरुहं धावतो माधवस्य ॥२७॥

प्रत्यम्भोधामतीरं प्रतिगिरिकुहरं प्रत्यटव्यन्तरालं
प्रत्यध्व प्रत्यनध्व प्रतितरुनिकटं प्रत्यटद्ग्रामकुञ्जम् ।
प्रत्याशं प्रत्यनाशं प्रतिनददुटजं प्रत्यनासन्नदेशं
प्रत्यासन्नप्रदेशं व्यचिनुत भगवान्प्रत्यगारं च वत्सान॥२८॥

द्विगुणमरुणिमानं दर्भगर्भाङ्कुरौघैः
क्षतचरणमसृग्भिश्चक्षुरर्कांशुनारैः ॥
अलभत वपुरभ्रश्यामलं श्यामभाम
श्रमवहलजलर्द्रां भ्राम्यतः कैटभारेः । २९ ॥

श्रमोदझरमेदुरं मिहिरभानुतुष्यं वपुः
स वीजयति पाणिना चलपटीकटीं नाटयन् ।
ललाटतटविस्फुटत्करसरोजमुद्वीक्षते
दिशो दश गवेषतेऽप्यहह गा त्रिवेशो हरिः ॥ ३० ॥

कार्यार्थी यदि जायते विधिवशात्कः प्राकृतः कः प्रभु
र्व्यामोहाननुविन्दते वितनुते व्यापारभारानपि ॥
हंसालीषु बकावलीषु हरिणश्रेणीषु वत्सभ्रमा-
द्बभ्राम प्रचुरं जगाम पुलिनं मोघः स मेघच्छविः ॥ ३१ ॥

तस्करापहृतहारमिवोरःक्षोणि खञ्जनदृशो गतशोभम् ।
हीनमम्बरमिवोडुकदम्बैर्बालशून्यपुलिनं हरिणाक्षि ॥३२॥

हरिरिदमवधाय दुर्विधातुः कपटकुतूहलमात्मनो विभूतेः ।
अघटितकटुदृष्टिरेव सृष्टिः पशुपशुपालकयोः स्वयं बभूव ॥३३॥

इदमवधाय माधवानुसेवी भृशमनुरक्तिभक्तिव्यक्तीकृतभय-
जजलधारम्, तदसहमान इव ब्रह्माणि जातमत्सर इव कोऽपि च

सुकृती व्याजहार किमपीदम् ॥

चौर्याचार्यपदाय सम्प्रति गवां चातुर्यमाचर्यतां
दुश्चर्यैकचतुर्मुखे न करवै किं वैरमस्मिन्नहम् ।
स्वच्छो हि प्रभुरेव तात इव नो गृह्णातु भृत्यानयं
यद्बभ्राम वने सदर्भकठिने मध्येऽह्नि दूये ततः ॥ ३४ ॥

प्रत्येकं भिन्नभिन्नाभरणगुणवयोवेषलावण्यलक्ष्मी-
नीलाशीलाङ्गभङ्गीमुखनखनयनभ्रूललाटाशनादीन् ।
द्वेधात्मानं किशोरान्कनकमिव तुलाकोटिकोटीरकाञ्ची-
केयूरादीन्प्रकुर्वन्निजमिव स बभौ दर्शयन्ब्रह्मभावम् ॥३५॥

तावत्तादृगशेषवेषवसनालङ्कारशोभागुणा
व्याहारव्यवसायविग्रहपयोव्यापारभोगादिकम् ।
रूपं वत्सपवत्सयोरपि हरिः स्त्रीकृत्य मायं ययौ
ध्वानैर्वेणुविषाणयोस्तरलयन् गोगोपवामभ्रुवः ॥ ३६ ॥

अघध्वंसिवंशीरसीरावचित्रं समाकर्ण्य कर्णे पुरा कर्णनेत्राः ।
वहिर्निःसरन्त्यो मुहुर्निष्पतन्त्यो दधुः क्षीबभावं परिक्षीणधैर्याः॥३७

श्रवोभाजि वेणोः स्वने नन्दसूनोर्गवां गोपवामभ्रुवामेकदैव ।
क्षरत्क्षीरधाराभिरासीदसीमस्तनाली घनालीढपाथोधरश्रीः ॥३८॥

क्वणत्किङ्किणीनां झणत्कारधारो रणत्काररराजीरुचं नूपुराणाम् ।
हरेर्वत्सहम्भारवः शृङ्गवंशीनिनादो जगाहे जगन्त्येव सायम्॥३९॥

क्वचिद्वत्सपालैः क्वचिद्वत्सजालैर्बलद्वन्यमालैः क्वचिन्नन्दबालैः ।
परब्रह्मभिः पूर्णमेवास तूर्णं पुरं गोपुरं चत्वरं मन्दिरं च ॥४०॥

बलत्पुच्छवत्सोच्छलद्धूलिधाराधुनीमग्नमानन्दसिन्धूरमग्नाः ।

समादाय दोर्भिस्तमादाय वक्षःस्वनन्दन्यशोदादयो घोषयोषाः॥४१॥

श्रमजलपशुकुलबहलधूलिधोरणीभिरभिसंकुलतया पाङ्किलकायकन्दलीकं प्रथमत एव कीलालधाराभिरभिकुसुमसमूहादिभिः सुरभीकृतस्नैहैः स्नेहैरिवाभ्यज्यत।

तदनु च निर्मलतरेण श्रीयमुनाजलपूरेण स्नपयित्वा, तदनु च वसने स्वेन सम्मार्ज्यावयवं कुसुमसुकुमारस्पर्शतया सूक्ष्मतया चातिसमीचीने कौशेयवाससी परिधाप्य, पुनरपि मञ्जीरप्रमुखचरणालङ्कारकिङ्किणीप्रभृतिकटिभूषणारुणनखरुचिरग्रैवेयकादिकग्रीवाभरणमुद्रिकावलयकेयूरकुण्डलादिभिरभिमण्ड्य, गोरोचनाभिरतिललितललाटपट्टकोपरि पटुतरतिलकमुल्लिख्य, नयनमनुरञ्ज्यापि मञ्जुभिरञ्जनैरलिकतलापितदलकमालिकामलिकिशोरमालिकामिव सम्प्रसाध्य, क्षणमभिलषितमन्नादिकमनुभोजयन्त्यः, क्षणमुरसि निवेश्य, गुह्यमितीव गाढमुपगुह्य, भुजवल्लीभ्यामामीलितनयनमनुभवन्त्यः किमपि सुखभरं, क्षणमपि करचरणोदरचिबुकमुखकपोलपालिभालमौलिस्थलमनुचुम्बन्त्यः, क्षणमपि जनितदरान्दोलहिन्दोलिकायामान्दोल्य, जगदानन्दनमपि नन्दनमानन्दयन्त्यः, क्षणमपि च निजाङ्कपल्यङ्क एव निधाय स्फुरदधरबन्धुजीवान्तरे स्तनमाधाय स्तन्यमधुरसुधारसं पाययन्त्यः, क्षणमपि निखिलविलक्षणमुदितक्षणमाख्याय साक्षादेव हरेः कलिकलुषकलापयापनक्षणं चरितमकृत्रिममाधुरीधामनिजधामप्राङ्गण एव लघुतरमनुद्रावं द्रावं निद्रापयन्त्यः, कर्मान्तरमेव न विदुरखिलाश्चर्यचातुर्यैकभुवोऽपि गोपनार्यः॥

आहूय हुङ्काररवेण दूराद्दुर्धावितस्तानभिधातुकामान् ।
(१)गोगोपबालानहरत्स मूढो, भेजे परं ब्रह्मशिशूभवत्ताः(२) ॥४२॥

स वत्सवत्सपीभूय विहरन् गृहगोष्ठयोः ।
दर्शयामास योगीन्द्रमात्मारामत्वमात्मनः ॥ ४३ ॥

दधति न मनो घासग्रासे न वारिणि वारिता
अपि च विपिने गोपैः कोपैः स्थितिं न हि कुर्वते ।
गिरिबिलतनूनुल्लङ्घन्ते समीक्षितुमुज्झित-
प्रतिनवसुता वत्सीभूते मुरद्विषि धेनवः ॥ ४४ ॥

कलितमुरलीध्वानाः प्राणान्मनाक् क न मेनिरे
व्रजमृगदृशः के पन्थानः स्फुटत्कटुकण्टकाः ।
न बत पतनं श्वभ्रे स्वासामिवालयकर्म्मण-
स्तनुभुवि हरौ गोवद्गोवर्द्धनाद्रिपिपासवः ॥ ४५ ॥

वृन्दावनैकदूर्वासमतां पूर्वाधिपोऽपि नाश्रयते ।
आस स्वर्देशादेवो वत्सीभूयापि यामभितः ॥ ४६ ॥

गाहन्तां गहनान्तराणि शतधा मुग्धा हि तन्मातरो
मच्चेतोऽपि हरन्ति हन्त हरिवद्वत्साश्च ते वत्सपाः ।
आः किं तन्न मयाप्यबोधि यदहो रामोऽपि नामेदृशो
भ्रान्तिर्यत्र विधौ कियानिह सरोजन्माप्तजन्मा विधिः॥४७॥

विषयमदमहिम्नामेव भूम्ना स मेने

---

(१) "मन्ये मनोज्ञप्रचुराशयेषु तपांसि वृन्दावनगोपगोषु" इति पाठः पार्श्वभागे केनापि लिखितः ॥

(२) शिशूभवत्परब्रह्म ता गा भेजे" इत्यन्वयः ।

क्षणलवलघुकालं वत्सरं मत्सरात्मा ।
परमजनि किमित्याशङ्कया स स्वयम्भू-
र्मुरमथनविनोदं द्रष्टुकामो जगाम ॥ ४८ ॥
तावन्तोऽपि तथैव तेन हरिणा तत्रैव तादृग्मह-
त्क्रीडाकौशलमावहन्ति शिशवो गच्छन्ति वत्सा वनम् ।
इत्यालोच्य विविच्य चेतसि चिरं क्रीडानमत्कन्धरः
श्रीबन्धोरवधाय धाम निपतद्धूलीषु सोऽलीयत ॥४९॥
दौरात्म्यं निजमनुचिन्त्य कैटभारे-
रुद्भाव्य भ्रमितधियो हृदि प्रभावम् ।
आमीलन्नयनमखण्डजाड्यदण्डं
द्राग्दण्डं वपुरपि वेधसोऽनुचक्रे ॥ ५० ॥
चण्डकर्म चरतो हि गुरूणां दण्डवत्पतनमेव न दण्डः ।
पद्मभूरिति विभुप्रियवृन्दारण्यधाम शरणं स जगाम ॥ ५१ ॥
कर्म्माणि स्मरतो निजानि विदलन्मर्माणि शर्म्माण्यगु-
र्द्राग्दूरेषु सहाक्षपाटवगणैर्भङ्गं च भेजे स्वरम् ।
संभ्रान्त्या शवनिर्विशेषवपुषो दुर्मेधसो वेधसो
भूपृष्ठे पतितस्य तस्य न ययुः प्राणा बहिर्व्रीडया ॥ ५२ ॥

अथ कैटभरिपुर्बन्धाय धातुरवस्थामास्थाय किमपि निजरूपमनिरूपणीयलावण्यवयोवेषविशेषप्रतिरूपमपहाय निखिलसुरासुरानवगाह्यमगाधमायाप्रपञ्चममृताविशेषहासलेशेन तरलतरापाङ्गेन सुधातरङ्गेणेवाभिषिञ्चन्ननतिदूर एव तरुणकदम्बतरुमवलम्बमानोऽमृतसंजीविनीमिवामृतवर्षिणीमिव विद्यामनवद्यां

मुरलीमुरलीकृत्य जीवयन्निव प्रबोधयामास धातारम् । स खलु ससंभ्रमचकितमुदीक्ष्य दिक्षु पुरो लक्षयति स्म पुण्डरीकाक्षम् ।

त्रिभङ्गीमदङ्गं भ्रमद्भ्रूभुजङ्गं कृपासङ्गरङ्गावलद्रक्तरङ्गम् ।
चतुःपार्श्वपुञ्जीभवन्मञ्जुगुञ्जावलीचारुचूडावलद्बर्हिखण्डम् ॥५३॥
सपत्रैकनीपं स्फुरद्दामकर्णं तमालाभ्रमालाशिलाश्यामवर्णम् ।
स्फुरद्रोचनाचन्द्रचञ्चल्ललाटं लसद्धारलक्ष्मीकवक्षःकपाटम् ॥५४॥
कटीनद्धचञ्चद्धटीशुद्धवेशं कृताखण्डपौगण्डशोभाविशेषम् ।
घनस्निग्धनीपाचलच्छायमूले स्थितं चण्डभानोः सुतायाश्च कूले॥५५॥
हताशेषवाम्यं महायोगिकाम्यं श्रुतीनामगम्यं प्रसादातिरम्यम् ।
विषाणं च वेणुं च वेत्रं च बिभ्रत्परं ब्रह्म साक्षात्स्वयम्भूः समीक्षे ।

न्युब्जानां पुनरब्जानां श्रियमाप मुरद्विषि ।
प्रसन्नेऽपि त्रपान्यञ्चच्चतुर्मुखचतुर्मुखी ॥ ५७ ॥

हिमीकर्तुकामा हृदेवास्य वामा हिमानीव हेमाभवासो वसानम् ।
हरिं हारिणं हारिता राजधानी प्रमार्ष्टुं प्रियागः प्रतुष्टाव(१) वाणी॥५८॥

परस्मै परस्माच्च कस्मैचिदस्मै
नमस्ते समस्तेश यस्त्वेष भासि ।
इतो वत्सपा(२)लीमितो वत्सपालान्-
विचिन्वन्वनेऽस्मिन्वितन्वन् रहस्यम् ॥ ५९ ॥
(३)तुलाकोटिमङ्घ्रौ कटौ क्षुद्रघण्टां
हृदि स्फारहारं श्रुतौ कर्णिकारम् ।

---

( १ ) विधिकृता स्तुतिः भा १० स्कं० १४ अध्याये ।
( २ ) "पाली पङ्क्तिः । ( ३ ) तुलाकोटिर्नूपुरम् ।

करे वेणुवेत्रे मुखे स्मेरनेत्रे
दधानाय चित्रे नमो विश्वनेत्रे ॥ ६० ॥

अनङ्गीव रङ्गी भवान्वेत्रमंसेऽप्यजन्मापि जन्मादधे गोपवंशे ।
अकर्म्मापि कर्म्माघहन्पाशुपाल्यं किमेतन्न चित्रं पुराणोऽपि बाल्यम्॥६१।

न वै वास्य गावो न च व्यासगावो विदुर्धाम देवोचितं ते कथञ्चित् ।
त्वमीदृक् त्वमी दृक्पथे कुर्वते त्वामभूदित्ययं मत्सरी वत्सरीत्या।।६२।

न वाचंयमानन्दमाधीनचेतो रमेश क्षणं चक्षमे स्प्रष्टुमेव ।
वनान्तर्निगूढं दधाना भवन्तं बलाद्वृत्तसचारी न किं मत्सराय।६३।

महानस्तु दण्डो वरं देव चण्डो विनोदं व्यतानीन्ममागस्त्वगण्डम् ।
श्रुतं रूपमेकं पुराद्यानुभूतं घनानन्दवृन्दावने वृन्दभूतम् ॥ ६४ ॥

जगत्सेवितच्छायपादोऽपि यत्त्वं तनू+ + + + + + ++ + +।
श्रुतिर्नेति नेति क्रमादन्वधात्वच्छ्रमादप्यविन्दत्पदं ते न हन्त ।
असत्स्वागसोऽपि प्रसह्यापराधं क्षमाशील साक्षादभूस्त्वं नमस्ते ।६५।

नरीनर्त्ति नाथ त्रयी जातहर्षा महावारिवर्षागमे बर्हिणीव ।
जपन्त्येकमेवाद्वयं ब्रह्म किञ्चिन्न नानेति जाते भवत्याद्वितीये॥६६॥

यदानन्दमाहुः परब्रह्मरूपं तथा तच्च मुक्तिस्फुरद्भक्ति वेदः ।
विघूर्णन्नघोऽपि त्रिलोकीमलोऽपि त्वयि क्षेमभागी क्षितो मोक्षलक्ष्म्या।६७

अथास्यातिमृत्योस्त्रयी त्रासमापत्तमोभूः क रक्षः प्रभाभूः क मोक्षः ।
'विदित्वातिमृत्युं तमेव प्रयाती'त्यथासींदृशी मोदयन्मोदराशिः।६८।

न तप्यं च तेपुर्न जप्यं च जेपुः परं धाम भेजुस्त्वयायुज्य रेजुः ।
अघौघैरवद्याश्च घोरैरघाद्याः कृपादृष्टिधन्या प्रभोः सृष्टिरन्या ॥६९॥

अहो पूतना सा जगद्भूतनाशा व्यधात्कर्म जातया विभो यातुधानी।

किशोरीभवन्तं भवन्तं प्रतार्यामृतं मातृकूटा ददे कालकूटैः ॥७०॥
स्मरन्सूक्ष्ममंशं जडीभूय भूमन्न वाचं च वाचंयमः कर्त्तुमीशे ।
भवन्तं भवन्तं पुरस्तादनन्तं कथं वीक्ष्य मूढा वयं वर्णयामः॥७१॥
त्वया वञ्चनापञ्चपञ्चाननेन त्रिलोकीप्रपञ्चो विरिञ्चीकृतोऽयम् ।
समं वत्सपालैरभून्नैव वृन्दावने वत्सवृन्दावने सङ्गभागी ॥ ७२ ॥
न वैकुण्ठवाटी नवाम्भोजबन्धुर्नगोलोकलक्ष्मीर्न च क्षीरसिन्धुः ।
घनश्याम वृन्दाटवी पाटवी स्यात्तनुव्यूहभाजा त्वयाभाजि भो या ॥७३॥
त्वमेकोऽपि नानासि हेमेव भूमंस्तुलाकोटिकोटीरकेयूरकाञ्चयः ।
वदन्त्येवमेके विरुन्धन्त्यनेके यतः स्याद्धृतो भृत्यभर्त्रादिभावः॥७४॥
पयोदर्पणानां प्रभेदेषु नाना बलाद्बिम्बशाली यथा भानुमाली ।
प्रकृत्येककृत्ये जगत्येवमेको जगद्भासयन्भासि नानेव नूनम्॥७५॥
तनूभूतमंशं दधद्योगभागी भवत्सुप्रभावैर्भवानेव भावी ।
हुताशैकलेशं महाकाष्ठकूटक्रमाद्वह्निकूटो यथा कैटभारे ॥ ७६ ॥
न शक्रादिदेवा न वा तीर्थसेवा न पीयूषभोगा न वा भूरियोगाः।
समग्रैकबन्धुः समग्रैकवैरी भवोद्दामदावे भवानेव दावः ॥ ७७ ॥
ध्यायन्तु ध्यानधन्या धरणिधरतटे जाग्रतो ज्योतिरग्र्यं
निर्व्यग्रं ते समग्राः कमपि च पुरुषं यायजूका यजन्ताम् ।
नेदं नेदं च वेदा विदधतु बहुधास्माकमास्तां पुरस्ता-
दुन्मीलन्नीलधाराधररुचिरुचिरः कोऽपि गोपीकिशोरः ॥७८॥
यागानां विप्रयोगः सुचिरमुदयतामास्तु योगप्रयोगो
हे भक्ते मातरुक्तेरविषयहृदयागोचरे त्वं प्रसीद ।
व्यक्तीचक्रे हि चक्री तव महिमचयं गोपिकाद्वारिबद्धो

नैकैरागत्य गोपैर्दधिहरणरुषा गर्जितैस्तर्जितोऽपि ॥ ७९ ॥
न न्यूनो नातिरिक्तस्तदवयवचयो वेषभूषादिकानां
तादृक्तावद्विधातुं प्रभुरपि यदभूः कोटिधा कैटभारे ।
तन्मन्ये सर्वभावै रससरसगुणासीमसौभाग्यवृन्द-
स्वच्छन्दानन्दवृन्दावनमनुभवितुं नो विधेर्मोहनाय ॥८०॥
दाम्ना बद्धोऽपि मध्ये प्रकुपितजननीभीतिरुद्धोन्तरेऽपि
प्रोद्यद्भक्तर्षिहर्षावहधरणिरुहोद्धारलीलावलीढः ।
क्षिप्त्वा क्षिप्त्वाक्षि दिक्षु क्वणितकटितटीक्षुद्रघण्टाघटाग्र-
स्तद्वाचं द्रागकार्षीस्त्वमिव किमु विभो कोऽपि भक्तानुकम्पी॥८१॥
एतादृक्कोटिकोटिप्रकटितनुतपःपूरिताशेषकामा
मेघश्यामाभिरामा गुरुगरिमचतुर्बाहवः पूर्णबोधाः ।
विद्यन्तेऽद्यापि तेऽमी मम हृदि करुणापाङ्गभङ्गीतरङ्गैः
सिञ्चन्तोदःप्रपञ्चं मधुमथन विधिः कोऽयमेको वराकः॥८२॥
स्रष्टावेकोऽस्मि स्रष्टा विरतिरिति मदस्यास्तु मोहो महीया-
नप्यास्तामप्युरस्तात्त्रिजगति कुयशः किन्तु तेनैष धन्यः ।
यत्ते प्रत्येकमेकं निजमपि निकटेऽपश्यदास्यैश्चतुर्भिः
स्तोत्रं कुर्वाणमुर्वीविलुठितमुकुटं कैटभारे स्वयम्भूः ॥८३॥
पानीयं पाणिपात्रैः क्वचिदपि तृषया निष्पिबन् क्षुद्भिरश्न-
न्पत्रं कुत्रापि दैवाच्युतममृतमिव क्षीणकौपीनवासाः ।
कर्त्तव्यैषानुकम्पा मधुमथन दृशोर्वाहयन्बाष्पधारां
गायन्नारायणोऽसौ व्यपनयतु वयः क्वापि कुञ्जे विरञ्चिः॥८४॥
चतुर्वेदाभ्यासव्यथितचतुरास्यैरलमलं

तदेतच्चैतन्यैरुदयतु तवैवोरुजाड्मा ।
विधिर्यैर्मञ्जीर त्वमिव हरिसंचारसमये
पदाम्भोजा लक्ष्मीर्न शुभनुतिझङ्कारमकरोत् ॥ ८५ ॥
पदाम्भोजं पायात्परमपददायादसुविदां
हृदां हार्दानीह बलवदनुरागं वहदिव ।
अधःशोणं शोचिर्दधदनलरोचिर्जय चिरं
घनास्निग्धच्छायाशायितमिव सायामामिहिरम् ॥ ८६ ॥
उपासे कौशेयं वसनमतिपीतद्युतिभरैः
परीतं त्वत्प्रीतिप्रसरदनुरागैरिव बहिः ।
त्रिलोकीमाच्छाद्य त्रिगुणपटमुत्साद्य जयत-
स्तव स्वच्छं स्वेच्छामयवपुरपि च्छादयति यत् ॥ ८७ ॥
अशून्ये वा सेवे समुदयति देवेश रसना
सरागैरप्येतैः कठिनिमसमेतैरपि भृशम् ।
अभूदेभी रत्नैर्जलधिरपि रत्नाकर इति
स्वपूर्वेषां स्वेषां महदनुगृहीतो हि यशसे ॥ ८८ ॥
नमस्तुभ्यं क्षुभ्यत्तरुणतरणे कौस्तुभमणे
+ + स्ति प्राशस्त्यं तव हि हृदि हार्दी हरिरधात् ।
सदा त्वं सागभ्यान्मिलितमिव शुभ्रांशुमदधः
स्मितज्योत्स्नालास्यं प्रतिफलितमास्यं मुरभिदः ॥ ८९ ॥
गुणामुक्ते मुक्तावलि वालिनि युक्तासि हृदये
दयेद्वः (?) स्नाहार्द्रं निभृतमभितः कैटभारिपोः ।
नमस्ते व्यस्तारिस्वयमशमथाधीनपरिधी-

भवद्ध्योमोद्दामद्युमणितुलनाकौस्तुभमणे ॥ ९० ॥
कदा वा कीदृग्वा कियदहह हृद्वागविषयं
शिखण्डी प्राचण्ड्यं तपसि किमखण्डं व्यतनुत ।
वदामः किं कस्मै त्रिभुवनगुरोर्दैवतशिरो-
मणेश्चूडादण्डः शिखरितशिखण्डो विजयते ॥ ९१ ॥
श्रुतौ लग्ना त्वं च प्रभवितुरयं च स्फुटमयं
भवाशङ्कापङ्कावलिवलनरङ्कायितमतिः ।
मुखेन्दुस्वच्छन्दद्युतिलहरिवंशीरवसुधा-
तरङ्गैरुत्तुङ्गैः स्नपितवपुरुत्तंस वलसे ॥ ९२ ॥
नमस्ते कस्तूरि त्रिदशतिलकेनासि तिलकी-
कृता त्वं सौरभ्यच्छविनिवहसाम्येऽपि वपुषि ।
अतः स्थाने गोरोचनकनकगौरोदितकणा-
नुरागैः सन्नद्धाधिकललितमध्या विजयसे ॥ ९३ ॥
ददे केयूराभ्यां मुरहर जडाभ्यामपि भवा-
न्भुजस्तम्भालम्बं शिशुपशुकदम्बं मृगयसे ।
मनो मे सोत्साहं परिशमितदाहं समुदभू-
त्समोदश्चद्दृष्टिः प्रभुरखिलसृष्टिष्वपि यतः ॥ ९४ ॥
सरःस्थं सिन्धुस्थं सुखयति हि सूरः सरसिजं
पुरस्थं पृष्ठस्थं कुमुदममृतांशुर्मदयते ।
अदूरस्थं दूरस्थितमपि समं पश्यति यमी
भवानेव स्वामी जगदवति वामीयतु न तु ॥ ९५ ॥
पयोजं संभूय स्वजनकमतिक्रामति पयः

पयस्त्वेतन्नैव व्यथयति परं वर्द्धयति च ।
पिता भर्त्ता बन्धुः सकलगुणसिन्धुस्त्रिजगतां
भवानव्याद्भूमन्सगुणमगुणं वा कमलजम् ॥ ९६ ॥

कुम्भीरग्रस्तकुम्भीश्वरवचसि हरे नाथ रक्षेति वृत्ते
निर्वर्त्मा वर्त्मभेदग्रहलवमटतस्त्रायतां नस्त्वरातेः ।
पक्षीन्द्रे नाक्षिपातः क्षणमजनि यतस्तत्क्षणोपस्थितायां
नो लक्ष्म्यां पक्षपातः पतति न वसने पूर्णबोधस्य बोधः॥९७॥

चूत्कारैश्छोटिकाभिः करतलकलितैर्नर्तयन् कोऽपि तालै-
रत्र त्वां दारुपुत्रीमिव नववयसि प्रेरयन्कोऽपि गोपः ।
आनिन्ये मृद्भिरद्भिः सुलभनवभवैः पल्लवैर्वश्यभावा-
नाः किं कुर्मो वयं तु भ्रमविधुरधियो नेति नेति भ्रमामः॥९८॥

एतद्विद्यानवद्या श्रुतिरधिकरणाधीनसिद्धौ च सृष्टौ
दृष्ट्वैनं मुग्धमिष्ठा धरणिरुदनिधेर्लीलयैवोदधारि ।
निर्व्यूढं तत्तु सर्वं परमिदमधुना पादयोः प्रार्थये त्वां
हे विश्वोद्धार धीरोद्धर विधुरमितो मोहपाथोधिमध्यात् ॥९९॥

इति स्तुत्वा नत्वा जनुरपि च मत्वा सफलितं
विरेमे वाग्बद्धाञ्जलिपुटकमग्रे प्रभवितुः ।
प्रभुं दृष्ट्वा तुष्टं तदनु मुदितोऽष्टा(१)पदगिरौ
स्वयम्भूः स्वं धामाभजत हरिनामादृतमुखः ॥ १०० ॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पू-
काव्ये पञ्चमोऽयमुल्लासः ॥ ५ ॥

---

( १ ) अष्टापदगिरौ सुवर्णपर्वते मेरावित्यर्थः ।

# "अथ षष्ठ उल्लासः"

हरिरपि परिवृत्य पुरोवर्त्तमानानेव तान् वत्सानादाय नादयन्मधुरमुरलीमागच्छन्नेव ललितानुशीलयामास पुरेव बहिरन्तं वत्सपालपरिवारमपि पुलिनपरिसर एव यमुनायाः।

अथ हरिमवलोक्य वत्सपालाः प्राहुरागतोऽयं हरिरागतोऽयं हरिरहो अरे इहैव स्थित, इहोपस्थितोऽसि नचिरेण कालेन, अस्माभिरेकोऽपि नास्वदितः कवलः, साधु साधु तदिदमवधीयतां सकलमविकलमेव द्राक्षाफलामिक्षादिकमस्ति, साक्षादेव किमाख्यामि, सहोपभोक्ष्यामि, बुभुक्षातिक्षामो भवानिव मद्विधोऽप्येषः।

विधाय विविधाधितक्षुधितवत्सपालैः समं
स भोजनमथो दधे भवनमेव गन्तुं मनः।
विषाणमुरलीरवैर्बहलवत्सकोलाहलै-
र्जगौ जय जय ध्वनिं सपदि भूर्भुवःस्वस्त्रयी ॥ १ ॥

प्रातः प्रातः प्रतिदिनमपि प्रीतचेता वसानः
पीतं वासो मुखरमुरली चेतिताहूतसार्थः ॥
यातायातैर्भवनवनयोरङ्गभङ्गीविनोदै-
श्चेतो मोदैः पिहितमकरोद्गोपगोपीगणस्य ॥ २ ॥

पार्श्वे पार्श्वे शिखरशिखरे कन्दरे कन्दरेऽद्रे-
स्तीरे तीरे तपनदुहितुर्निर्झरे निर्झरे च ॥
वत्सान्धेनूरपि धवलितो धूलिभिर्धीरधीरं
धावं धावं व्यहरदभितो वारयंश्चारयंश्च ॥ ३ ॥

पौगण्डैकपदं शिखण्डिनि मुदं बिभ्रच्छिखण्डं दध-
च्चूण्डाग्रे तदखण्डताण्डवकलासंजातकौतुहलः ॥
नृत्यं क्वापि कदापि तैः सह वलन्मजीरशिञ्जीकटी-
चञ्चत्किङ्किणिकारणत्कृतिचमत्कारैर्बभौ चक्रवत् ॥ ४ ॥
पाणिभ्यामवरुद्ध्य मध्यमवनेः पादौ च पक्षाविव
व्यातत्य भ्रमिभाजिविभ्रमवशाद् भ्राम्यच्छिखण्डीयति ।
ग्रीवाचिक्कणचारुचा(१)ङ्गिमलसच्चूडं नटच्चन्द्रकं
धावन्ति स्म तमेव बर्हिवनिताश्चित्रायितं बर्हिभिः ॥ ५ ॥
उन्मिलत्कलकाशलैर्मर्दकलाः शिष्यीकृताः कोकिलाः
गीताम्भोधिजलभ्रमाभगमकारम्भैर्जिताः षट्पदाः ॥
आपूर्याधरपल्लवे मुरलिकामुद्रायता नृत्यता
ग्रावाणोऽपि जलीकृता जलमपि ग्रावीकृतं सर्वतः ॥ ६ ॥
गीतं कीरमयूरकोकिलगणैरेणैरहो वीक्षितं
गुञ्जद्भृङ्गमृदङ्गगुञ्जुमरवैरारम्भि गम्भीरता ।
सन्तुष्टैरवगन्धपुष्टकुसुमं वृष्टं च भूमीरुहैः
प्रेष्ठे गोष्ठमहामहोत्सवविधौ दैत्यद्विषः कानने ॥ ७ ॥
कच्छानुस्फुरदच्छनिर्झराशिलातल्पे शयानं भजन्
श्रान्तिभ्रान्तिभरेण मन्दपवनो दाक्षिण्यभागी बभौ ।
तादृक्कोकिलकाकलीतदानिलप्रारब्धानिद्राविधे-
र्लक्ष्मीलालितपादपल्लवमहो गोपेन संवाह्यते ॥८॥

---

(१) "चाङ्गस्तु शोभने दक्षे" इति मेदिनी ।

वनोपवनदुर्वनीगिरिगभीरगर्त्तावनी-
निरूढनवकन्दलीग्रहिलवत्समुत्साहयन् ।
भ्रमान्विविधाविभ्रमैरथ सहोपलेभेऽर्भकैः
समीरणसमाहृतं सुरभितालगन्धं हरिः ॥ ९ ॥

अयि वद कोऽयमकस्मादस्मद्विधानामपि चेतांसि विस्मापयन्, विस्मारयन् मधुरमकरन्दमन्दिरामन्दरारविन्दमान्दोलयन्नपि मैलिन्दमालिमन्थरयन्नपि निजगुरुभारैरिव गन्धवाहमुवाह सुरभितवनकन्दरो मनोहरो गन्धः, इति वचनमभिनन्द्य नन्दनन्दनश्रीदामसुबलमुखाः सुखावहाः सखायः सकलमविकलमेव निवेदयाञ्चक्रिरे गोपाः ।

अहो अवधीयतामवधीयतामस्माभिः । आवेदनीयं स्वयमेव बालावनीरुहो महासहायीकृतगन्धद्वारेव दुरात्मदनुजमदनानुभावभगवत्पदारविन्देषु निवेदयति स्म धेनुकाभिधेयदनुजनिधनमहोत्सवारम्भम् । व्रजकुलशरणसमीप एव देवतामुनिमनुजमनोरथातिरूढं गूढममृतमिव सुपरिणतफलजालमावहन्ति प्रचुरतरताल(१)वनानि विद्यन्ते । भिद्यन्ते खलु यत्र त्रिभुवननिधनधुरंधरदुर्धराचारधेनुकासुरसमबलबहलबन्धुपरम्पराणामारावैर्निर्घातघोषैरिव निखिलहृदयानि दूरतोऽपि दुर्वारैः ।

तथा हि—

निद्रां विद्रावयन्ति स्फुटममरभुवः कुर्वते दिग्विभागं
प्रोद्भेदं भूरिखेदं श्रवणबहुतया भोगिभर्त्तुर्दिशन्ति ।

---

(१) तालवनप्रवेशकथा भा० १० स्क० १५ अध्याये ।

गर्जत्पर्जन्यपर्याकुलितमिव महीभामुरङ्गावयन्ति
द्राग्दृष्यद्रासभानां ध्वनदशनिमदोद्घाटिनो घोरघोषाः॥१०॥

अथ तेषामाकर्ण्य वर्णितानि कर्णयोरवगाह्यासत्त्वभूर्यारावैरिव रासभानामुत्थापितौ तान्यपि तानपि च द्रष्टुकामौ चेलतुरभिरामो घनश्यामो दामोदरोऽपि श्रीदामादिभिरभिवेष्टितौ परितः । हरिरवलोक्य तानैवयभावापन्नानासन्नानेव विषणानिव मालिन्यातिशयसम्पन्नाननापन्नानतुलतरतालतरुन्नाम, तमाह बलरामम् ।

अहो अवधीयतामवधीयताम्

मूलादामौलिनीलावयवसुवलितः किञ्चिदूर्ध्वाभिचञ्च—
त्पत्रालीचित्रमूर्धा समुदयमयते तालभूमीरुहो न ।
त्वं धर्त्तानन्तभर्त्ता धरणिरिति दधे सावधाना धुनानं
ध्वान्तारेर्धाम धन्या धवलमणिमयाखण्डदण्डातपत्रम् ॥११॥

उर्वी दूर्वाग्रपूर्वासितरुचिरुचिरा त्वामनन्तेऽत्यनन्तं
दृष्ट्वासौ स्पष्टबद्धाञ्जलिपुटफलका कोटिकोटीर्बभूव ।
नोत्ताला मेघकालाः कवलितककुभस्तुङ्गभावैर्दलानां
नीलानां पुञ्जकारैः पृथुलफलफलैर्नद्धमूर्धान एते ॥ १२ ॥

रुद्ध्वा मूर्धानमूर्ध्वं सुविपुलफलकैर्योद्धुमुद्दामधाम्ना
मार्त्तण्डेन प्रकाण्डा मरकतविततस्तम्भसम्भावना भूः ।
दुर्दान्ता ध्वान्तसेना दलजटिलशिरस्तालसम्भारदम्भादू—
भूयः सम्भूय वृन्दावनघनघनिमोज्जृम्भणादुज्जिहीते॥१३॥

वृन्दावने कलितगोपकिशोरसङ्गमङ्गीकरिष्यति महीभरभङ्गरङ्गम् ।

तालध्वजेति विदधे स विधिस्त्रिलोकिजैत्रध्वजं विपुलतालतरुच्छलेन १४

अदभ्रैरेवाभ्रैः सह मिहिरजोत्तुङ्गलहरी
विगाढुं स्वर्गङ्गासलिलमुदभूदम्बरचरी ॥
नभस्स्थूलस्थूणावलिरिव घनालीव फणिनां
न पाली तालानां समुदयति कालीतनुरिव ॥ १५ ॥

गृहाणैकं पाणौ रजतगिरिसानौ तम इवा-
भकस्तालाङ्क त्वामनुभवतु तालाङ्कमभितः ॥
इतीशे गोपानामभिलपति कोपादिव बली
हली लोलीचक्रे तदुरुतरचक्रं भुजबलैः ॥ १६ ॥

तरूनान्दोलयामास हली तान्करलीलया ।
गम्भीरमदकुम्भीन्द्रो मृदुरम्भावलीमिव ॥ १७ ॥

अथ बलविपुलभुजाभिघातजातकम्पानां तालपरम्पराणां फलपरम्परासम्पाता धारासम्पाता इव निःशम्पाततवारिधराणामचिरेणोदपद्यन्त ।

भुजाघातेन ते शीर्णास्तूर्णं चूर्णाचिकीर्षवे ।
तालाङ्काय ददुस्तालास्तालं कायपरिरक्षया ॥ १८ ॥

अत्युच्चैः पतितानि तानि परितस्तालानि तालद्रुमा-
त्कालानि स्फुटितानि कान्यपि रसैः सिक्तानि रक्तान्यपि ।
व्यक्तानीव शिरांसि मांसलगुरुग्रीवाटवीतो दश—
ग्रीवस्यानुबभूव कैटभरिपुर्भूयोऽपि वृन्दावने ॥ १९ ॥

· अविरलपतदुरुतालफलानामवारध्वनिधोरणीमवधाय क्रोडाध्मातधेनुकाभिधानदनुजाधीशप्रमुखखराकारप्रखरमुखराः सुराः

सर्वे तमभिययुर्वेलाभिलङ्घनरंहसोऽपि घोरोर्मय इव कल्पकालीना नाल्पजगदाप्लावनसंकल्पशालिनो महाजलधेः ।

क्षुरक्षुण्णक्षोणीस्खलितपवनोच्चालितरजः-
समूहैः संमोहं कृतजलधिरोधः फलभुजाम् ।
विधाय व्याधूयोपरि परिवलद्वालधिमसौ
जघान व्याघोषी चरमचरणाभ्यां बलहृदि ॥ २० ॥

घूर्णद्धर्घरघोरघोषमुखरब्रह्माण्डभाण्डोदरं
क्रोधेन क्षितिमुल्लिखन् पुनरपि प्रैषन् खुराग्रैः खरः ॥
अभ्रूभङ्गमनक्षि रङ्गिमचलद्भ्राङ्गिस्मितं बालधौ
तार्क्ष्येणेव फणी बलेन रुरुधे धावन्क्रुधा धे(१)नुकः॥२१॥

लाङ्गूलाग्रे गृहीत्वा शशकमिव मुहुर्भ्रामयित्वा समन्ता-
द्वान्तासृग्धोरणीस्रग्गगनवनहारिद्धेनुकं सावहेलः ॥
दिग्दाहारण्यदाहारुणघनघटनारक्तवृष्टीरनिष्टा-
स्तालाङ्कस्त्यक्तशङ्कस्त्रिभुवनमचिरान्मानयामास मानी॥२२॥

लगुडेनेव तालानि विशालानि हलायुधः ।
तेनैव पातयामास निक्षेपक्षपितायुषा ॥ २३ ॥

धेनुकासुनिधने प्रधने ये क्रोधबाधितधियो दधुरोजः ।
तालपातनकृते हलिनस्ते क्षेपणीयपदवीं ययुराशु ॥ २४ ॥

किं ब्रूमस्तालमूल्यं दधाति हृदि सुधा नामतो यस्य रीढां
प्रोढाहङ्कारिणस्ते सपदि विदधिरे यत्कृते प्राणदानम् ॥
धन्यास्ते धेनुकाद्या ध्रुवमिति तु वयं ब्रूमहे यत्तनुभ्यो

---

(१) धेनुकासुरवधकथा भा० १० स्कं० १५ अध्याये ।

दत्त्वा प्राणान्परेभ्यः फलमतुलसुदुःसङ्करश्रान्तिशान्त्यै ॥२५॥

मुखपङ्केरुहे तालं तालाङ्कोऽधत्त लीलया ।

अशङ्कत परं को न शशाङ्कोपहतं तमः ॥ २६ ॥

विघटितकटुकण्टककोटिकोटीरमिव कैटभारातिरटवीनां तद्वनं विधाय तालध्वजमहनीयतया क्षणमुररीकृतमुरलीक एव क्षणमङ्गीकृतसंगीत एवमुत्तुङ्गमुखरितशृङ्ग एव क्षणमाह्वयन्नेव धेनूरभिधाय नामधेयानि क्षणमतिचञ्चलवत्सतरं धावन्तमनुधावन्नेव दिनपरिणामरमणीयतया क्षणमनुकूजन्तं कोकिलमनुकूजन्नेव. क्षणमपि स्वेच्छाविहारतया पुरोवलक्षितपक्षिच्छायामच्छादयन्नेव, क्षणमपि स्वच्छाययैव स्वमाययेव विहरन्, क्षणमपि पशुपाललीलया लगुडयष्टिमालोडयन्नेव, क्षणमपि पदकटकपटूत्कटनादमोदमेदुरो नृत्यन्नेव, दिशि दिशि च मयूरपरम्परामुन्मुखमनुपश्यन्तीमनुपश्यन्नेव, दिक्सुन्दरीणां दृगिन्दीवरसन्दीपिनीमञ्जनशलाकामिव कामपि वनमालिकामालोकमान एवाटवीहरिद्वलीढशिखराधिरूढनवपल्लवरागपरम्परामिव, सन्ध्यारुचिमभिसंदधान एव सकलदिनधेनुधूलीधाराकवलनभानुमालिभानुमालानिमज्जनधूसरीभवदलककुलबद्धचारुचूडाग्रचलच्चन्द्रकचन्द्रमुखचन्द्रालिकातिलकचन्द्रकरचरणनखचन्द्रमा वृन्दावनचन्द्रमा मन्दं मन्दं वृन्दावनजनमनःकुमुदवनमुद्बोधयामास निजपादपातैः ।

आचूडं पशुधूलिधूसरमभूदाभालमुद्यद्घन-

स्वेदग्रन्थिलपाकपोलमधुरस्मेराननं तद्वपुः ।

वासोलङ्करणैरपेतकिरणैर्धनोश्च रेणोर्गणैः
शोभा तु द्विगुणीबभूव सुतरामाभीरचूडामणेः ॥ २७ ॥

सुखमुषितनिशावसानसमयसमुचितसमेतसाधुकृत्यो निवर्योदयदुडुपरिवृढाभिरामं रामं यथाकामं विहितविलासवेषभूषैरभिभूषितो व्रजकिशोरैरनुससार वनममरशिरोमाणिराभीरशिरोमणीभूय । अतिरङ्गेण तरलमनस्तयोत्तुङ्गकुरङ्गोत्तरङ्गितैः सह तरङ्गितानि तन्वन्तश्चटुलवत्सरैः सह दण्डमनुवञ्चन्तो विहरन्तोऽपि परिश्रान्ताः कान्तारे तृषाविषान्तकारणतयेव विषान्तरमनुसन्दधानाः कालियह्रदविषमेव महाविषमापयुराभीरशावकाः सर्वे ।

अथ भगवदवलोकनानुभावलावितमहाविषानुभावा गतजीवा अपि जीवन्ति स्म विस्मयमावहन्ति स्म मिथो बहुकालम् । अनन्तरं तु मनसि विचिन्त्य तमन्तकमिवानन्तजन्तूनां त्रिभुवनजनितचमत्कारविषोद्धारकारिणं गरुडानवगाह्य ह्रदे निर्वाह्यनिखिलासह्यमधिवासमतिभासमानमसुरनरकिन्नरयक्षरक्षोगणगन्धर्वगर्वचर्वणादुर्वारं कालिय(१)दर्वीकरं दमयिस्यन्नुद्दामकेसरिकिशोर इव शिखरिशिखरं हरिरग्रवर्त्तिनमधिरुरोह कदम्बमविलम्बम् ।

कदम्बालग्रीवश्रुतिततिकदम्बैककलिकः
कदम्बप्रत्यग्राङ्कुररुचिरचूडाग्रमधुरः ।
कदम्बेभ्योऽर्भाणां प्रतिनवकदम्बानि वितरन्—

(१) कालियदमनकथा भा० १० स्कं० १५–१७ अध्यायेषु वर्त्तते ।

कदम्बव्यालम्बी स्फुटकुसुमचुम्बी स रुरुचे ॥ २८ ॥

जहौ नो मञ्जीरं न च कटितटीघर्घरघटीं
न हारं नो हीरावलिवलितकेयूरवलयान् ।
भुजस्तम्भास्फोटस्फुटितफणिदृग्वाटमहिरा—
यदेतस्मिञ्झम्पं हरिरकृतकम्पं जगदधात् ॥ २९ ॥

तिमिरैरिव दुर्निवारसारैर्विषभारैरिव विश्वनाशकारैः ।
जलदैरिव बद्धभीमनादैः सलिलैरुत्थितमुच्छलद्भिरुच्चैः॥३०॥

उन्मज्जन्भूरिमज्जन्बहुतरलहरीर्वर्द्धयन्दोःपदाद्या—
स्फालैः कालः करालैः कलभ इव नवाडम्बरारम्भभीमः ।
पादाम्भोजन्महस्ताम्बुजवदनसरोजन्मदृक्पुण्डरीकैः
साटोपं कैटभारिर्भुजगपतिह्रदं भूषयामास भूयः ॥ ३१ ॥

करे कलभलीलयाकृत चकार चिक्षेप च
स्मितामृततरङ्गिणि स्ववदनेऽपि दिक्प्राङ्गणे ॥
निरञ्जनगुणोञ्ज्वलद्युतिमुदे तदीयं जलं
भ्रमद्भ्रमरविभ्रमं तदुरु बिभ्रदभ्राजत ॥ ३२ ॥

अम्भोगम्भीरभङ्गोत्तरलगुरुफणामण्डलत्वेन जाग्र—
त्पाथोनिर्भेदिनिर्यद्द्युतिनयनकुलं ज्वालयन् जालमग्नेः ।
स्फूर्जत्फूत्कारगर्जद्गुरुगरलगलं सृक्किणी लेलिहानः
कालः कालात्करालः फणिपतिरुदगात्कालियः कालतोयात्॥३३॥

फणाभिः स्फाराभिर्दशशतमिताभिर्द्विनयने
गताभिः प्रत्येकं प्रवरमणिमेकं द्विरसने ।
पुरस्तादुत्तस्थौ मुरविजयिनः कालियफणी

बभौ नार्को नाग्निर्न मणिचपले नाशनिशनी ॥ ३४ ॥
क्रोधान्धः संदधानः सुखमयशयनस्वापभङ्गैकहेतुं
साक्षात्पक्षीन्द्रकेतुं तमहिपातिरसौ नापि पश्यन्नपश्यत् ।
छायादानात्स मायाकलितनरतनोर्वर्द्धयन्वारिलीलां
विस्फाराभिः फणाभिः प्रभुशिरसि शतच्छत्रवाही बभूव॥३५॥
लक्ष्मीर्यत्र विचित्रितैव नियतं यत्राबभौ कौस्तुभः
श्रीवत्सेन यदञ्चितं यदुपतेर्लब्ध्वा तदुच्चैरुरः ।
दन्तेषु त्रुटितेषु तेषु गरलस्योच्चेषु मोघेष्वथो
भोगैनैनमवेष्टयद्गजमिवालानैः फणी भीषणः ॥ ३६ ॥
नावासो गणितः श्रियोऽपि नु मता न स्वीकृतापि त्रपा
श्वभ्रं वारि वनं च कण्टकघनं वर्त्मापि न प्रेक्षितम् ।
भ्रश्यत्केशदुकूलभूषणमुपालक्ष्येति दुर्लक्षणै-
रुड्डीयेव विनिर्गतं व्रजभुवामाबालवृद्धैर्द्रुतम् ॥ ३७ ॥
धावं धावमरण्यधोरणिसरोधारानिकुञ्जावली—
ष्वद्रेरूर्ध्वमधो दरीषु यमुनारोधस्सु बाधाकुलैः ॥
गत्वा कालियधाम वीक्ष्य तमहिक्रोडावगूढं भुवि
भ्रष्टानामुदबोधि कातर इवाक्रन्दस्य कोलाहलः ॥ ३८ ॥
गोपीगोपगवामबाधितशुचां बाष्पाम्बुधारामुचां
हारावैः सह यास्यतो बहिरसूनालक्ष्य लक्ष्मीपतिः ।
आस्फालस्फुरदङ्गभङ्गवलवज्झङ्कारभूषागणं
द्राग्भिन्दन्फणिभोगबन्धमुदगात्कुम्भीव कुम्भीलताम्॥३९॥
गलद्गरलभीषणं ज्वलदभ्रतीव्रेक्षणं

घनश्वसनगर्जनैः प्रलयमारुतारम्भिणम् ।
अनेकसरसीरुहोद्धटमिवैककनालं हठाद्
घटायितफणावलिं हरिरधात्करे कालियम् ॥ ४० ॥
जहाति च दधाति च स्फुटमनेकधा माधवः
पलायनपरायणे भ्रमति भोगिनि भ्राम्यति ।
विवर्त्तयति सर्वतः करगृहीतलाङ्गूलकं
किशोर इव कौतुकी कलितकेलिगण्डूपदम् ॥ ४१ ॥
जलमनु हरिः कारं कारं विहारमनेकधा
भुजगपतिना सार्द्धं श्रद्धां वहन्बहु नर्त्तितुम् ।
नटवरवपुस्तन्मूर्धानं हठादधिरूढवान्
शिखरिशिखरी रंहःसंघादिवोन्मदकेसरी ॥ ४२ ॥
फणां फणातः फणिनोऽधिरुह्य फणाप्रधानं हरिरारुरोह ।
सोपानबन्धस्य शिलां शिलातः सुतुङ्गसौधाग्रमिव क्रमेण॥४३॥
पादाग्रे नूपुराभ्यां कटितटनिकटे क्षुद्रघण्टाघटाभि—
र्बाहोरग्रेऽपि चञ्चन्मणिमदवयवैर्नाट्यमारम्भि सद्यः ।
हारेणोरस्युदारे नभसि पटतटेनालकेनालिकान्ते
कान्ते तत्तत्फणान्तर्नटति सुनटितं गण्डयोः कुण्डलाभ्याम्।४४॥
सूयन्ते स्मापदान्तप्रभृतिरुचिभराखण्डचूडाशिखण्डै-
स्ते भावास्ते च हावाः प्रतितनुजपदं भिन्नभिन्नास्तदङ्गैः ।
यान्दृष्ट्वा देवगोष्ठी विगतधृति जगौ गर्जदम्भोधिजैत्रं
वादित्रं वादयन्ती सतुरगवदनव्यूहविद्याधराद्या ॥ ४५ ॥
प्रत्यङ्गप्रतिबिम्बिताः फणिफणाश्रेणीमणीनां गणा

नृत्याकल्पमनल्पमेव विदधुर्दूरादपि श्रीपतेः ।
एवं च प्रतिबिम्बशालि न मधु स्वान्तः समन्तादमी
साधीयस्तदहो महोरगपतिर्यत्तानधान्मूर्धभिः ॥ ४६ ॥

रत्नान्तःप्रतिबिम्बितेन शतधा स्वेन स्वयं माधवः
स्वात्मारामपदं प्रदर्श्य विदधे नृत्योत्सवं कोटिधा ।
हस्तोत्क्षेपघनाङ्गभाङ्गिचटुलभ्रूदक्तरङ्गोत्कटं
पादाग्रेण नखेन पार्ष्णितलतो गुल्फेन झम्पैश्चरन् ॥ ४७ ॥

गन्धर्वाणां च यूथं कुलमपि यमिनां देवतानां च वीथी
दिक्पालानां च माला कुलकुवलयकं दिक्षु संवीक्ष्यते स्म ।
विभ्राम्यान्विभ्रमेणाविदिततनुभिदा लेशमारभ्य रंहो—
नंहोभिः स्तूयमानः क्षणमकृत हरिस्ताण्डवडाम्बराणि ॥४८॥

कृत्वा नृत्यति कैटभारिरनतं मूर्धानमूर्ध्वादधो-
नासादग्वद्वनात्त्रिधा च हृदसृग्धाराकुलं कालियम् ।
पत्युः प्राणपरीप्सया फणिपतेरन्तःपुरादन्तरा
विद्युद्दामपरम्परा इव पुरः पेतुः स्त्रियो दण्डवत् ॥ ४९ ॥

तुष्टाव च सुष्ठु निष्पेष्टारं दीर्घपृ(१)ष्ठकुलपतिकुलप्रोष्ठी(२) नयनागोष्ठी ।

जनुर्दन्दशूके गुणोद्गारमूके पुरः कैटभारेः स्त्रियः किं वदामः ।
परं त्वेतदन्तर्निकामं जपामः कुले कद्रुजानां कृती कालियोऽभूत्॥५०॥

मुनिर्मौनशाली यतिर्योगमाली न शुद्धेन धर्तुं हृदाभूदधीशः ।
शिरोरत्नभूषामहारत्नभूर्षाभवन्भासि भोः किं तपः कालियस्य॥५१॥

---

(१)– दीर्घपृष्ठः सर्पः ।  (२) प्रोष्ठी=शफरी ।

न वा दण्डानीयो न वा खण्डनीयः
परं कालियोऽसौ पदा मण्डनीयः ।
इतीवाधिरूढः प्रभो गूढपादं
स्वभृत्याण्डजाधीशचण्डावसादम् ॥ ५२ ॥

त्रिकोणा धरित्री कियानत्र भारः स्वयं शेषभावादिमामुद्बभार ।
कथं ते नु विश्वंभराकारभारं सहेतात्हिरेव क्षरत्प्राणशेषः ॥ ५३ ॥
कटीवत्समूर्धत्रिभेदात्तवाऽसौ त्रिलोकीशकायत्रिभागीत्रिलोकी ।
भवद्भारसोढा न भूभारवोढा कियान्गूढपादामयं कोऽपि मूढः॥५४॥
कठोरं कठोरात्फणामण्डलं तत्पदं कोमलादप्यलं कोमलं ते ।
मणिग्रावघाताद्यथारक्तजातं वमद्रक्तशोचिर्दधाद्विव्यथे न ॥ ५५ ॥
भजे वैनतेयं नतेनैव मूर्ध्ना ह्रदावासमासादितो येन भोगी ।
ह्रदं मर्मखेदच्छिदं च प्रपद्येऽमुना यत्र दृष्टो भवानिष्टदिष्ट्या ॥५६॥
भवत्पादपङ्केरुहाङ्केन पूतो मृतः स्यादयं चेद्वयं चानुयामः ।
भविष्यन्त्यनाथास्तदैतेऽद्य जाता भवानेव भावी जगन्नाथ नाथ॥५७॥

पक्षीन्द्रः क्षम एव कर्तुमचिराद्दुर्भीमदर्वीकरा
हन्तव्ये विरम स्वयं न हि नखच्छेद्ये कुठारोद्यमः ।
क्रीडामात्रमपोक्षितं यदि तदा तज्जातमास्तामयं
प्राणैरेव कथं कथंचन फणी क्षेमाय नः क्षम्यताम् ॥५८॥

स्तुतिमिति भुजगेन्द्रसुन्दरीणां हरिरवधाय विधाय ताण्डवानि ।
मृदितमिव विषं भृशं तमासीद्विषमयदुर्जयवीर्यमुत्ससर्ज ॥५९॥

विश्वम्भरभराक्रान्तः क्रान्तो वान्तोरुशोणितः ।
कथं कथमपि प्राप्तप्राणस्तं प्राह पन्नगः ॥ ६० ॥

येन क्वापि सुधा व्याधायि विधिना कुत्रापि हालाहलो
हिंसैका क्वचिदेव देव करुणा कुत्रापि नैसर्गिकी ।
दुःखी कोऽपि सुखी च कोऽपि मृदुलः कोऽपि प्रचण्डः परो
दण्ड्योऽसौ प्रभुरस्मदं विहरते तुभ्यं किमीश ब्रुवे ॥ ६१ ॥

कर्माधीनमिदं वदन्ति सुधियस्तेभ्यो नमस्कुर्महे
साक्षी तत्र सरोजपत्रनयनः श्रीमान्स्वयं सर्वदा ।
दण्ड्यं कर्म तदस्तु कुण्डलिकुले जातस्य पापस्य मे
दण्डः कोऽयमये मयेति विदितो नाद्यापि निद्रावता ॥६२॥

मया तेनाहूताः पिबत चलमित्थं जलधियः
सुदुर्वाराभीराः सह पशुगणैर्ये पपुरपः ।
हुताशस्थं हस्तं दहति न हुताशः क्व नु विभो
प्रभूणां चेष्टा हि स्फुरति जगतां मूर्धनि गुरुः ॥ ६३ ॥

स्वामिन्नाज्ञापयतु विज्ञेतरस्मै कस्मैचिदस्मै विस्मृतनिखिलाय प्राप्तप्रायनिधनाय प्रतिपन्नहालाहलैकधनाय ।

यत्कुर्वन्भगवदभिमतो भवन्नयमुपपलभते परं भव्यम् ।
आकर्ण्याहमुराराातिररातिकुलमर्दनः ।
मदङ्घ्रेरङ्कनिःशङ्कः सिन्धुं याहि ह्रदं जहि ॥ ६४ ॥

प्रभुवरकरुणापाङ्गपीयूषतरङ्गिणीतरङ्गाभिषेकमधुरिमातिरेकानुभवार्द्रीभावतया समीचीनमुरगवरो वरं वव्रे ।

ईदृक्कर्म्म न शाम्यतीश यदि मे स्यादत्र जातौ जनु—
र्मा भूयान्मतिरीदृशी मधुरिपो दृष्टोऽसि मूढैर्यया ।
श्रीभाजां पुनरीदृशीदृगमितः स्यात्ताण्डवाडम्बरं

मौळौ जन्मनि जन्मनि प्रभुवरैतत्ते पुरः प्रार्थये ॥ ६५ ॥

अथ विघटितकुम्भीनसदम्भकानने त्वरकुम्भीश्वरकिशोर-इव यमुनाम्भोलहरीस्तम्भ इव तटमवगाह्य ददर्श साम्राज्यं शोकदहनानाम् ।

क्वचित्तातो मूर्च्छामनुभवति तच्छायसदृशी
क्वचिन्माता जातास्मृतिरपगतासुप्रतिनिधिः ।
क्वचिद्गावो दीनाः क्वचिदवनि लीना व्रजगणा
हली मोहं जानन्नपि भजति हन्तैक्षि हरिणा ॥ ६६ ॥

तमालोक्योत्तस्थुः प्रतिनवतमालद्युतिधरं
सुधासेकैरिन्दोरिव निशि दिनग्लानकलमाः ।
यशोदाद्या नार्यो युगपदभिवार्यादधुरमी
पुमांसो नन्दाद्या निधिमिव दरिद्रास्तत इतः ॥ ६७ ॥

परीरम्भं केचिद्विदधुरपरे चुम्बनविधिं
परे मूर्धाघ्राणं करकमलमेके हृदि हरेः ।
अदृष्ट्वा दृष्ट्वैव प्रमदमपरे भेजुरभितः
पतन्तो हन्तोपर्युपरि निपतन्त्येव च परे ॥ ६८ ॥

अथ सकलपशुपशुपालकुलैः सह ह्रदवरसन्निध एव परम-घनच्छायासु तेषामखिलायासमपानिनीषुरुपित्वा निशि भृशमु-दयन्तमन्तकमिव गोगोपानां ग्रसमानमेभिः सहाशातलगगन-तलानि बलादालीढत्रिभुवनमिव क्वचिदपि सिमसिमायमानवन-परम्परं क्वचिदपि कटुकठोररवोद्गारमुखरितदिग्व्रजगाढविगा-ढकोटरपूरिततरुवारं भयचकितमार्त्तनादगणितप्रमादविश्वज-

नैरुदीक्ष्यमाणं प्रवर्त्तितप्रलयमिव दावानलं चिरविहितजलावगाहप्रतीकारमिव प्रतितनुरुहकुहरकूपनिविष्टदुष्टदीर्घपृष्ठविषविषमौषधमिव कवलीचकार लीलयैव वनमाली ।

व्यगाहन्त हरेरन्तरभ्रंलिहदवाग्नयः ।
समालीढदिशः क्रोडमिव शम्पाः पयोमुचः ॥ ६९ ॥

इति विविधातिलोकलीलानुशीलनविस्मापितसकलगोपालकुलो वृन्दावनमानन्दयन्ननुविन्दति स्म गोविन्दः ।

मरुं कुर्वन्नुर्वीदलविकलमुर्वीकुलकुलं
दिशोर्का दुष्प्रेक्ष्याः प्रबलदवदावानलभुवः ।
पिकान्मूकानन्धानहह धरणीधूलिभिरलीन्-
दिनं दीर्घं दीनां निशमपि निदाघः समुदभूत् ॥ ७० ॥

निदाघदीर्घाहदिनेशदीप्तितप्ते ययुर्व्योमपथे त्वराभिः ।
हया हिमांशोर्मिहिकाभिषेकादिति त्रियामा तनिमानमाप ॥७१॥

प्रचण्डमार्त्तण्डमयूखमण्डलादुपेतदण्डाः पथि सप्त सप्तयः ।
सुदुर्बलीभूय निदाघवासरे शनैः सरन्तीति दिनेषु दीर्घिमा॥७२॥

कदापि भाण्डीरवने गणेन विहर्तुकामः सह निर्जगाम ।
हरिः सरामः सकलाभिरामः संवाह्यसंवाहकभावपूर्वम् ॥७३॥

कटीतटीबद्धघटीविशेषो वपुःश्रिया बल्लवनिर्विशेषः ।
वयःक्रियावेशगुणैश्च तैस्तैरभूत्समस्तैकसुहृत्प्रल(१)म्बः ॥ ७४ ॥

बलं बलीयांसमयं बलीयानुवाह वाहादपि वेगवाही ।
बभार विश्वम्भरतामथाऽसौ तस्यासुरं भावमुदीक्ष्य भीमम् ॥७५॥

(१) प्रलम्बासुरवधकथा भा० १० स्कं० १८ अध्याये वर्त्तते ।

घटीं बिभ्रन्नीलां कनकमयभूषावति शितं
प्रलम्बं सालम्बं व्यजयत विशालं बलवपुः ।
गिरीन्द्रे कुम्भीन्द्राक्रातेरिव चिरं धातुरुचिरे
बलद्वन्द्वो मध्ये समुदयदहो दामलतया ॥ ७६
प्रलम्बासुरमूर्धानं दलयामास हेलया ।
हली हस्तेन पारीन्द्रः कुम्भिकुम्भस्थलीमिव ॥ ७७ ॥
तनुक्रमात्तेन तनीयसापि दिग्भूमियव्यापि दधत्स्वरूपे ।
सुधांशुनेवोग्रतमःकरेण बलेन नीतः प्रलयं प्रलम्बः॥७८॥
मही दाहं धत्ते भजति भृशमम्भो दहनतां
हुताशज्वालेयं झनझनितझञ्झानिलघटा ।
विना ज्योतिःकूटं नयनपथमायाति न नभ-
स्तदेकं भूतानां जगदजनि भूतं शुचिमनुः ॥ ७९ ॥
प्राचीभागिनि भानुमालिनि दिशं भेजे प्रतीचीमियं
प्राचीमञ्चति चेयमञ्चति पुनस्तस्मिन्प्रतीचीमपि ।
मध्येव्योम समेत्य पश्यति समं हन्तुं समं तत्तमो
न च्छायापि बहिः प्रयाति तनुतो मध्येऽह्नि मन्ये भिया८०॥
असह्या सह्यापि क्व पुनरपरेण द्युतिरह-
र्पतेराहो सह्या दहति वपुरच्छायमभितः ।
स दूरेऽभ्यर्णेऽपि प्रबलदव(१)दावोऽयमुदयन्-
दुनोतीति क्रोधादिव मुरभिदाऽसौ कवलितः ॥ ८१ ॥
अधैर्यं यच्छन्ती ह्रियमपि दहन्ती स्मृतिहरी

(१) दावानलपानकथा भा० १० स्कं० १९ अध्याये।

क्षुधान्धादाभासैः कवलनबलेनेव ववृधे ।
बिभिक्षे यल्लक्ष्मीपतिरपि बुभुक्षाकुलमना
मुहुर्भक्ष्यं धूमध्वजशरणभूमीसुरगणम् ॥ ८२ ॥

अहह ज्यैष्ठ्यकठिनद्राघिष्ठदिनद्विगुणितजठरनिष्ठुराग्निज्वालाजालतया हतया भक्षार्थमर्थीभूय यदकृतार्था एव, गोपानामनन्तकोटिब्रह्माण्डपतिना केलिवशाद्भाण्डीरवनभागिना प्रेषितानामनवरतवीतिहोत्रपरिचर्यापर्यायमात्रकार्याणां होमाचार्याणां पुरान्निर्याता इति, दुर्जयदुर्यशो दिशो दश यत्कज्जलयदुज्ज्वलीबभूव; तदेवाद्यापि धूम इति सोमकलङ्ककलायामलमुपगीयते वीतिहोत्राणाम्। द्विजपतिरिति नाममात्रमैत्रीवशादङ्कशालितापि शशाङ्कस्य । अनधिकृतजठराग्निशान्त्युपायान्तरतया तेषामशान्ततया च शान्तेरुपायं तु सुधाभिषेकैर्जगदाप्याययन्तीमेकां मुरलीमेव तामुररीचकार ।

आधीनुद्दलयन्नपि विषयान्तरं विस्मारयन्नपि मनांसि जडयन्नपि झंझानिलपरम्परां मूकयन्नखिलसत्त्वकुलं स्थगयन्नपि रविरथमण्डलमाखण्डलोपलमयीमिव पुण्डरीकरमणनन्दिनीमनोहरतया निर्वाहयन् , अनिर्वचनीयानन्दनन्दसन्दोहमभिनन्दयन्नपि सिद्धानां चिरशुद्धसमाधिमुद्धूनयन् दन्तालीढनवयवसमपि चित्रार्पितमिव पशुगणमुत्कर्णयन्नेव सम्भावयन्नेव जम्भादिकाहरणं धूमध्वजावधानधनान्धानामनवरतहूयमानहोमहुताशहोतिहुङ्कारपूर्णकर्णानां तेषामाकाणायितनयनाकुलानि तूर्णमेव हरिमनुसन्धाप्य सन्धावयन् , आभीरसुन्दरीणां

हृदयमन्दिरमान्दोलयंस्तदनु कन्दलीमतितुन्दलीकुर्वन्नुपचित-पुलकाङ्कुरालिकुलतया भृशमवशयन्नपि नयनानि निर्निमे-षयन्नपि वदनानि गुरुगरिमानुवादमोहमेदुरतया मुखरयन्नपि मधुरमधुसुधाधाराद्यसाधारणमाधुरीधाम समुदजृम्भि मुरवैरिणा मुरलीनादः ।

तपनतनयाकूले मूले तरोरपि भङ्गिभि-
स्तिसृभिरमृतस्यन्दी सन्दीपितस्मितबिन्दुतः ।
सजलजलदश्यामः कामत्रपास्पदमालिभि-
र्द्विजकुलसरोजाक्ष्याः साक्षात्कृतो हरिराक्षिभिः ॥ ८३ ॥

इति चरितचमत्कारजागरूका याग्जूकानुवादवावदूकाः क्वचिदूचिरे किञ्चिदचिरेण विपश्चितः केचित् ।

भगवति नमो विद्येऽवद्ये मृषा निरवद्यता
तव यदि हरेर्भक्तिर्व्यक्तिर्न चेतसि किं त्वया ।
भवदनुगतैः कुण्डे चण्डे हविर्भुजि हूयते
गहनशरणाः कामाद्वामा भजन्ति परं[पदम्] ॥ ८४ ॥

अथ निजपरिपारिपालनीयवनीसकलावनीधरानिखिलावनी-रुहनिवहावनीकेदारकूपकासारगम्भीरतरतडागनागानागनदनदी-नागादिजन्तुपूगानतिगाढमापीडयन्तीं निदाघमिव तर्जयन्ती महोर्जितैर्गर्जितैः पर्जन्यपरम्पराणां पृथुलतरपयोधरपयोधारासारै-राराज्जगन्त्येवाप्लावयन्ती जगतां मातेव भगवती प्रावृ(१)डावि-र्बभूव बहुभूत्यै ।

(१) प्रावृड्वर्णनं शरद्वर्णनं च भा० १० स्कं० २० अध्याये ।

पयोधरे सान्द्रधनुर्नखाङ्का तडिन्निचोलाञ्चलवीजिताङ्गी ।
धारा वहत्स्वेदभरा चिराय रराज भुक्तेव घनागमश्रीः ॥८५॥

शिखण्डिमण्डलं क्वापि क्वापि मण्डूकमण्डलम् ।
जगौ यश इवात्युच्चैर्जलदस्योपकारिणः ॥ ८६ ॥

सौर्वा वज्रतडिद्रुतैः परिचलत्क्रौञ्चालिफण्यञ्चिताः
गर्जन्तो जलदा नदाधिपतयो गम्भीरगर्भाम्भसः ।
निर्भिन्नाञ्जनकान्तयो लहरिभिर्धाराभिराराधिता
वर्धन्ते स्म ह्रिया बभूव परयागस्त्यो निरस्तोदयः ॥८७॥

माभूद्भग्नमिदं व्योम भूरिभारैः पयोमुचाम् ।
इतीव विदधे वेधा धाराभिः स्तम्भधोरणी ॥ ८८ ॥

आर्द्रं वारिभिरम्बरं गुरुपरीणाहः समन्तादपि
व्यक्तिं प्राप पयोधरो विहसितं नीपैर्द्विजैर्जल्पितम् ।
ध्वान्तोन्मुक्तविगाढकुन्तलभरैराच्छाद्य सद्यो वपुः
सूर्याचन्द्रमसौ निमील्य च दृशौ विश्वश्रिया च स्थितम् ।८९।

तेजोभावमयं स्वयं स विदधे विश्वं तु धाराधरो
धाराभिर्जलधीबभूव जगती शब्दानुमेयं नभः ।
सान्द्रासारवनं विलङ्घ्य सुहृदा संधुक्ष्य नीपे क्षणं
तेजः स्वान्तपुटेषु पान्थसुदृशां वातेन संदीप्यते ॥९०॥

उल्लङ्घ्यापि सुतुङ्गभूमिमभितो वर्त्मावरोधाहित-
क्रोधादेव तनून्निपात्य बहुधा कान्तारपारंगताः ।
ध्वानेषु श्रुतिबद्धवीथिषु हठाद्दात्यूहधारामुचो
रागान्धा इव संदधुर्जलनिधेरध्वानमेवापगाः ॥९१॥

प्रतिगिरिश(१)राणि प्रतिवनशरणि जुघूर्णिरे शबरसेना इव धराणिधरधातुधारानिचयपटुपाटाक्षेपटलीपाटलीभूताः हिण्डीरपाण्डरवनकुसुमक्षता वंशोत्तंसादिकनिखिलविभूषाः क्वचन करिकुलमाकुलयन्त्यः क्वचन च विहङ्गपरम्परां पातयन्त्यो बलदविरलबहलकोलाहला हि वाहिन्यः ।

नदीगर्जैरुर्व्यां दिवि च घनगर्जैर्दिविषदां
मनोगर्भस्रावः समजनि मनोजस्य परितः ।
हरिर्लक्ष्मीं वक्षस्यकृत वपुरर्द्धं पुरारिपुः
प्रियां गर्भस्रावात्तत इव वलद्भीतिरकरोत् ॥ ९२ ॥

(२)अथ कुर्वाणं गीर्वाणपतिमनर्हणीयमुर्वीधरं गोवर्द्धनमेव तत्रापि स्वमात्मानमेकतो नतिमुखरमुखारविन्दमन्यतो निखिलबलिभोक्तारं स्वयमुद्भवन्तं भगवन्तमनुभूय परिभूतपुरुहूतैः प्रथममाहूतास्तदनु बहूपादिष्टा गोपगोपीगवामानिष्ठाय भृशंभूयिष्ठं दृष्टवन्तः प्रौढमूढवन्तश्च प्रलयप्रतिष्ठानाः घनाघनाः पवमानाश्च ।

उत्पाद्योत्पाद्य तुङ्गोद्भटविटपिकुलं चण्डमुड्डीनयन्तः
क्ष्मापृष्ठे पातयन्तः सह गृहनिवहैस्तूर्णमाचूर्णयन्तः ॥
गाहन्ते गन्धवाहाः स्वनरखगपशून्गाढमुत्पीडयन्तो
वृन्दारण्यानि वृन्दारकरमणगिराकल्पसंकल्पभाजः ॥९३॥
दूरोड्डीननिशान्तसन्ततिहठादुद्घाटितोत्पाटितो—

(१) 'शराणिः पथि चावलौ" इत्यजयः ।

(२) गोवर्धनधारणकथा भा० १० स्कं० २४-२५ अध्याययोः ।

द्धूतोद्भ्रान्तनितान्तचूर्णिततरुग्रामं च वृन्दावनम् ।
उद्दामद्विपकूटकुट्टितसरोजन्माटवीयां दशा-
माटीदुद्यदनल्पकल्पमरुतां संघेन रंहस्वता ॥ ९४ ॥
निर्यातनिर्यदसवः पशवः पतन्ति
पुञ्जीकृताः क्वचन कुत्रचिदस्तसञ्ज्ञाः ।
गोप्यः क्वचित्क्वचन गोपगणाश्च वाता-
ज्जाता लता इव नदीरयसान्निपाताः ॥ ९५ ॥
हरिर्दृष्ट्वा + + ममरपातिचेष्टामुपहसन्
धुनानो मूर्धानं ध्वनितवदनाम्भोजकुहरः ।
उदञ्चद्दोर्दण्डं विततमसितच्छत्रमभितो
हठात्तेषामूर्ध्वं द्रुतमकृत गोवर्द्धनमहो ॥ ९६ ॥
गिरिद्वारा गर्वं मुररिपुरखर्वं गिरिभिदो
जिहीर्षुर्दोःपक्षं गिरिमकृत रूक्षेक्षणरुचिः ।
स मेने नो जम्भच्छिदमपि न जम्भच्छिदशनीन्
रिपूणां हि प्रोत्थापनमिह सतां लाघवविधिः ॥ ९७ ॥
दोर्दण्डनालदण्डं कमलमखण्डं स भूधरो भर्त्तुः ।
यदुपरि जलदकदम्बं वलदवलम्बो बभूव रोलम्बः ॥ ९८ ॥
उत्पाट्यैककरेण कुड्मलमिवाम्भोजस्य हेलावशा-
द्देहीकुर्वति पर्वतेन्द्रमाचिराद्दोःस्तम्भसंभावनैः ।
किं कुर्वीत पुरन्दरो हरिभुजच्छायाभिरायोजिताः
सर्वे निर्वृतिमापिरे पशुगणा गोपाश्च गोपाङ्गनाः ॥ ९९ ॥
ससप्तसप्तानिलसप्तसिन्धुघनेन सप्तर्षिनुतः सहाद्रिम् ।

स सप्तवर्षो दिवसानि सप्त बभार लोका मुमुहुर्दिसप्त ॥१००॥

निर्यत्प्राणेषु तिर्यग्गतिविधुरजगत्प्राणवर्गेषु दुर्गो
मोघीभूतेषु मेघेष्वचिरकवलितोद्भ्रान्तसप्तार्णवेषु ।
कुण्ठे वैकुण्ठबाहुस्थिरशिखरितराच्छिन्नजम्भारिदम्भे
दम्भोलौ जम्भभेदी स्वयमपि सुरभिःसा भुवीहां चकार१०१॥

निपपात करक्रीडाकन्दुकीकृतभूधरे ।
दृग्राजीन्द्रस्य राजीवराजीव वनमालिनि ॥ १०२ ॥

माधवस्य सविधेऽस्य सम्भ्रमान्मुद्रिता सुरपतेः समं दृशः ।
चन्द्रिकोल्लसितचन्द्रसन्निधौ मुद्रणैव गतिरम्बुजन्मनाम् ॥१०३॥

तरङ्गैरान्दोलो भवति जलधेरेव जलधि-
र्न तान्मुञ्चत्येभ्यः प्रभुवर न वा कुप्यति मनाक् ।
चिदानन्दाम्भोधेर्जगदमितविद्भ्रह्म मुरजि-
त्तदस्मद्रक्षाणां प्रतिफलति पक्षः प्रतिपलम् ॥ १०४ ॥

विषं विश्वद्वेषि त्रिदशसुखसाध्वीमपि सुधां
दधात्यर्चिश्चन्द्रं दहनमपि चण्डीपतिरधात् ।
धरा धत्ते तुल्यं लघुतृणममूल्यं तरुमहो
प्रभुणामेतद्धि व्रतमिव समग्रेषु समता ॥ १०५ ॥

अभारि भारश्चिरमस्य साधु कर्पूरपूरैरपि साध्वदीपि ।
सहस्रमक्ष्णां त्वयि यद्विगाह्य स्वाराज्यसाम्राज्यमधःकरोति १०६॥

सुगीतं गन्धर्वैर्नटितमपि विद्याधरनटै—
र्विचित्रैर्वादित्रैर्नदितमभितो दुन्दुभिमुखैः ।
गवामिन्द्रं सिक्त्वा सुरभिपयसेन्द्रः ससुरभिः

स भूयः स्वर्भेजे भगवदनुभावस्मृतिपरः ॥ १०७ ॥
दिशो दृष्ट्वा स्पष्टा मिहिरमनतिक्लिष्टमहसं
पुरस्तादाभीरा निरगुरथ गावोऽथ वनिताः ।
मुरारातेर्माया पुनरपि निरायाममकरो-
त्तथा तत्तद्देशं द्रुमकुलमविस्मेरकुसुमम् ॥ १०८ ॥
आदौ प्रान्तमधादुदूहदान्तिकतटे पश्चात्स्वयं चंक्रमा-
द्धस्ताद्धस्तमसम्भ्रमः शिखरिणं संचारयन्सञ्चरन् ।
तस्मिन्नेव पदे तथैव निदधे भूयस्तमस्तश्रमः
कः प्रत्येतु शिशुर्बभार स गिरिं सोऽप्युद्धृतो भूधरः ॥ १०९॥

अथ गोवर्द्धनधरणिधरोद्धरणधुरीणावधाना नानाभीरसुधीरा मधुरिमधाराधोरणीधामन्यनतीतसप्तहायने मधुसूदने कोऽयमलौकिकाचारकारीति कस्मादेवंविधोऽस्मासु जन्मधारीति बहुधा संदेहसन्दोहमावहन्तो नन्दोपकण्ठमुत्कण्ठातरलधियोऽधिगत्य पप्रच्छुरु(१)त्सुकाः सर्वे ।

अयि खलु न कदाचिदाचरितं कैरपि क्वचिदपि न करिष्यते चेदृशमलोकलक्षितं कर्म्म, श्रुतमपि न सुरेषु केष्वपि क्षितिधरणकुतूहलं क्वापीति नन्द ? जगदानन्दने तव नन्दने तनोति मनोऽतिशयसंशयप्रचयमिति, निखिलव्रजकुलवचनावधानधूयमानमूर्द्धा मूर्द्धातिवृद्धगर्गानुभाणितमनुसस्मार ।

तदेव चाह सर्वस्मै सकलाभीरकुलसार्वभौमो यशोदारमणः । आभीराः ? शृणुत यदाह भूतभाविष्यद्वर्त्तमानानामर्था-

(१) भाग० १० स्कं० २६ अध्याये कथेयम् ।

नां साक्षात्कर्त्ता दाक्षायणीभर्त्तेव मुनिगर्वमाननीयो गर्गः ।

प्रेरितो वसुदेवेन देवेनेवानुगृह्णता ।
द्रष्टुमिष्टमहं नन्द तव नन्दनमागतः ॥ ११० ॥

अयमाद्यो हि देवानामनवद्यतया तव ।
वंशस्याभून्महोत्तंसो हंसः पूर्वगिरेरिव ॥ १११ ॥

साधनीयमनेनाधिबाधनं शतधा तव ।
अस्मिञ्जाते जगज्जातमुज्ज्वलं+विधाविव ॥ ११२ ॥

अयं भूयोभिराभीरकुलभूषणभाषितैः ।
अस्य बालस्य नासाध्यं त्रिषु लोकेषु किञ्चन ॥ ११३ ॥

वचोभिस्तेजोभिस्तनुभिरपि येऽमुं तनुभृतो
भजन्ते तानेषोऽप्यनुभजति तैस्तैस्त्रिभिरपि ।
त्रिभिस्तैर्ये वैरं विदधति विधत्ते पुनरसौ
त्रिभिर्वैरं तेषां त्रिभुवनपतीनां किमपरे ॥ ११४ ॥

इदमभिधाय धीरधोरणीशिरोमणौ विरमति गर्गमुनौ निगादितमिदमादरान्मया तत्पदारविन्देषु । स्वामिन्नस्माकमकस्मान्निधिरिव विधिनानुकूलेनानीय घटितोऽसि यत्तदप्येतत्तयोरेव कृतयशोदारोहिणीगर्भावरोहणयोरनुभावोऽनुभूयते भूयान् ।

क्वाहं वनचरो मूढः क्व यूयं गूढदर्शिनः ।
क्व भाग्यभोग्या निधयः क्व दीनः कणभिक्षणः ॥ ११५ ॥

मुकुरेणेव दूरस्थः पुरस्थेन दिवाकरः ।
अमुनैव कुमारेण भवान्मे सुलभीकृतः ॥ ११६ ॥

अमुनैव सहायेन मया त्वनुभूयसे ।

अलक्ष्याण्यपि लक्ष्यन्ते चक्षुषा ह्युपचक्षुषा ॥ ११७ ॥

यद्यस्मद्भाग्यवशादनायासादुपस्थापितोऽसि विधिना तद्विधिबोधितेन विधिना मम च वसुदेवस्य च सुतयोरेतयोः समुचितनामकरणसंस्कारानुग्रहकारी भवितुमर्हसीति किमधिकमभिधास्ये सकलार्थसार्थवित्तमस्याग्रे इति मदनुवर्णितमाकर्ण्य वर्णानां गुरुराकर्णपलितोऽपि तरुण इव वसुदेवाभिप्रायममायमुन्नाम्य भावयामास तत्तथा सर्वम्, मुनिरनयोस्तु नाम कर्त्तुकामः कामयामपर्यन्तमन्तमन्तश्चिन्तयामास चाह चास्मभ्यम् । अहो किं नामधेयमभिधेयमस्माभिरनन्तजन्मकर्मगुणाभिधानयोरनयोः ।

तत्किं नाम यदस्य नामितगुणस्यासीदसीमं यश-
स्तन्वानैर्गुणकर्मजन्मभिरपि प्रख्यापितं सर्वतः ।
शुभ्रः शुभ्रतयाऽरुणोऽरुणतया पीतश्च पीतश्रिया
कृष्णः कृष्णतयेव सम्प्रति सदा नाम्नाऽयमाम्नाय्यताम् ॥११८॥
अनन्तत्वादनन्तस्य नामानन्त्यमुदीरितम् ।
तथापि बलभद्रोऽयं बलभद्रतयोच्यते ॥ ११९ ॥

इति मनसि समातिजागरूकं भणितमुदेति मुदे मुनीश्वरेण ।
बहिरपि निरगादगाधमोहो मम तनयोऽयमहं पितेति सद्यः॥१२०॥
किमधिकमाचक्षते भवन्तो हि विचक्षणा दीर्घदर्शिनः सर्वे ।

कपालमालीकृतभूरिकभ्रा (?)
तडिल्लतालोहितलोलजिह्वा ।
मघोनि मोघे मलिनोऽग्रघोषा
वर्षानिशाचर्यपि निर्जगाम ॥ १२१ ॥

अथ पौगण्डे वयसि वर्त्तमानो प्रवर्त्तमानयौवन इव ललितगतिमाधुरीमधुरावलोकचातुरीमृदुहसितमनोऽभिरामभ्रूनिकामताण्डवादिभिराभीरसुन्दरीणां गतिवचनमनांसि समसमयमेव हरन्निहरन्नपि सह सहचराभीरपरम्पराभिरटवीभुवमवगाह्य शरदभिनवागानशोभाभूमानमालोकयन्नाकर्णकयन्नपि सखिलोकं वर्णयामास जलदसवर्णाकारो हरिर्ऋतुकालम् ।

लसदिन्दुसुन्दरमुखी सदम्बरा धवलाभमगङ्गलघना वधूरिव ।
जितनारदद्युतिरभिन्नपारदा शरदागता सपदि शारदाच्छविः॥१२२॥

प्रतिवारि वारिजमवारषट्पदं प्रतिशाखिमौलिकुसुमालिकौशलम् ।
प्रतिजन्तुमानसमदभ्रकौतुकं शरदाविरास रभसाय कुर्वती॥१२३॥

सह वारिजैरजनि वारि निर्मलं
सह वारिदैरभवदर्जुनं नभः ।
सह ताण्डवैस्तडिदगाच्छिखण्डिनां
सह तारया हि विरराज चन्द्रमाः ॥१२४॥

मलिनस्य भूरितरपङ्ककारिणः परिवर्द्धमानतमसः पयोमुचः ।
परिणामनिर्मलतमत्वमुत्तमं तदनन्तसेवनफलं तु मन्महे ॥१२५॥

सह संबभूव सुरभूपकार्मुकं तदनश्यदस्य ताडितोऽपि सुभ्रुवः ।
परिपाण्डुरोऽपि जरसाप्यजीवनः परिहीयते न पुनराशयानघः॥१२६

पद्मालंकृतमम्बु हंसकमनोहारि क्षमामण्डलं
कुर्वाणः सुमनःप्रसादमुदितं सर्वं समन्ताद्वनम् ।
शुभ्रांशुस्फुरदातपत्रलसितो नक्षत्रमालाश्रित-
श्चञ्चच्चारुसिताभ्रचामरचयो भ्रेजे शरद्भूपतिः ॥ १२७ ॥

(१)सरघा बभूव कुसुमेषु भूपते-
र्वनमम्बुसंभृतनवप्रसूनतः ।
यमिनो मनोऽपि लभते स्म लक्ष्यतां
शरदागमे जगदिदं जिगीषतः ॥ १२८ ॥

पुनरुद्बभूव विदितः स कुम्भभूः परिपीय येन जलधिस्तनूकृतः ।
इति भीतिभारहतवेगडम्बरास्तनिमानमापुरतितापमापगाः॥१२९।
गर्भं दधुः प्रावृषि सिन्धुयोगान्नद्यो भृशं भावितपार्श्ववृद्धिम् ।
प्रसूय पद्मानि पयो दधानाः पुनश्च तेभ्यस्तनिमानमापुः ॥१३०।
पटुचञ्चरीककपटेन मेदिनी स्फुटपुण्डरीकमिषतोऽपि दीर्घिका ।
सहसा प्रसार्य्य नयनानि सर्वतः शरदुत्सवं परमपश्यदुत्सुका॥१३१।
तिष्ठन्तो गूढभावाः कुसुमितविपिने व्यक्तसंचारवन्तः
पान्थान्निष्पातयन्तः क्वचिदतनुशरैर्गाढमापीडयन्तः ।
पद्मिन्याः पद्मकोशं भ्रमरपरिजनारब्धकोलाहलद्रा-
गाकृष्योद्घाटयन्ते क्वचन परममी दस्यवो गन्धवाहाः ॥१३२॥
प्रस्पन्दे नारविन्दं विहरति सरसीशीकराबद्धसङ्गः
कुर्वन्नामूलमुन्मूलनमयमबलामानभूमीरुहाणाम् ।
स्वेदोच्छेदानुमेयो धृतिधरणिधरं चूर्णयत्येव तूर्णं
न ज्ञातःकोऽपि वातः कमलपरिमली किं मृदुः किं कठोरः ॥१३३॥
रेजे राजेव राजा भगणगगनयोः शोभयालम्बिरत्न-
स्रक्श्रोणिच्छत्रशाली धरणिधरवरोत्तुङ्गसिंहासनस्थः ।
साम्राज्ये साभिषेकं स्वतनयमुदधेः पश्यतो हृष्यतोऽन्त-

(१) सरघा मधुमक्षिका ।

निःसीमेवानुरागप्रतिकृतिरुदभूदस्य सन्ध्यारुणस्य ॥ १३४ ॥
कोकं कुत्रापि कोकीं क्वचिदपि दमयन्पद्मिनीपद्मकोषं
बध्नन्द्राग्दण्डयिष्यन्निव विधुरुदगाद्वीक्ष्य तन्मित्रमस्तम् ।
बिम्बो यस्याम्बुलम्बी जलधिमधिशयानस्य भोगीन्द्रतल्पे
भित्त्वा गम्भीरमम्भो बहिरिव विदितः कौस्तुभः कैटभारेः॥१३५॥
रविरस्तमाप जगदस्तमानयज्जलमाविरास जलधेस्तमोऽमिषात् ।
इति गाढवाडवशिखीव चन्द्रमाः कवलीकरोति तदुदेत्य सत्वरम् १३६
अवगाह्य वारि बहुसिन्धुमध्यतो घनशोणबिन्दुरयमिन्दुकुञ्जरः ।
मृगचञ्चरीकचितगण्डमण्डलो दिवसावसानरभसादुदञ्चति ॥१३७॥
पुरः कुपितकामिनीवदनलोभनीयः द्युति-
स्ततः कनकदर्पणप्रणयिकान्तिभारार्पणः ।
अथ प्रबलपाण्डिमस्थगितपुण्डरीकच्छवि-
र्न वीक्षणपथे क्षणं जगति केन नीतः शशी ॥ १३८ ॥
निर्भिन्नध्वान्तधारायसनिगडमसावङ्कुशानामभावा-
दुद्दामीभूय भीमं दिशि विदिशि तथा कानने बम्भ्रमीति ।
आरात्तारालिताम्यत्त्रिदशपरिवृतः पूर्णचन्द्रद्विपेन्द्रः
श्यामश्रीकुम्भकूटस्फुटितमदझरीसंचरच्चञ्चरीकः ॥ १३९ ॥
पूर्णं कर्पूरपूरैरिव निचितमिव क्षीरसिन्धोरसन्धि-
प्रोद्वेल्लद्भङ्गभारैः पिहितमिव घनैश्चन्दनक्षोदपङ्कैः ॥
शुभ्रैरभ्रैरदभ्रैर्घटितमिव दधत्फुल्लमल्लीरिवासी-
त्पीयूषैरुल्लसाद्भिः स्नपितमिव सुधाधामतो नाम विश्वम् ॥१४०॥
त्राणाय नानाविधजन्तुचेष्टामिष्टामतानीत्तिमिरं तदानीम् ।

छायाछलाच्छन्ननिजस्वरूपं तमो रुषा निघ्नति यामिनीशे।१४१।

साकमुल्लसति नाकनिकेतान् व्योमदिव्यतटिनीतट एषः ।
पोतपालिभिरलं कलहंसो भावली न च न वा रजनीशः।१४२।

तारकापतिरुदेति न ताराः किन्तु कुन्तलकिणाविलमध्यम् ।
पुष्पभासितनभःशयनीये कौसुमं रतिपतेरुपधानम् ॥१४३॥

अम्बरस्फटिकभाजनभाजः प्रोच्छलत्सलिलबिन्दव एव ।
चण्डभासि जलधौ कृतझम्पे भूधरात्समुदयन्ति न ताराः ।१४४।

मध्ये गवां विहरतः परिपाण्डरस्य
नीलाम्बरस्य परमस्य दधार लीलाम् ।
तारापतिः समुदितः परितः परीत-
स्तारावालीभिरसिताङ्कविरोचिताङ्कः ॥ १४५ ॥

पीयूषद्रविणविभूतिसंभृतोऽपि क्षीराब्धिप्रथितजनुश्च शीतभानुः ।
पद्मिन्या यदहरदेष भोः सुवर्णं वैवर्ण्यं तदकृत दुर्यशःकलङ्कः ।१४६

अब्धेर्धनं स्मरमहौषधमामरायु-
राप्यायनं त्रिजगतां गतिमौषधीनाम् ।
पीयूषधामनि निधाय सुधां स वेधा
मुद्रां व्यधादिव तदङ्कमिषां तदङ्के ॥ १४७ ॥

भ्रमद्भ्रमरमन्तरं वनभुवो नभोमण्डली-
सुधाकिरणमण्डना स्फुटितपुण्डरीकं पयः ।
प्रफुल्लकुसुमावनीसुरभिगन्धवाहा दिशा
दधाति मधुमाधुरीमधिकसाधुरीतिः शरत् ॥ १४८ ॥

अहो बहुकालमतीतोऽपि सुरभिसमयो ह्यागत एवानु-

भूयते मनसा ।

यत्र खलु—

मूलादामौलिरूढाङ्कुरनिकुरतया दीर्घजाग्रत्तनूजा
ध्यानस्था मौनभाजो मुनय इव वनस्था नवस्थाणवोऽपि ।
अप्रादुर्भूतपुष्पा अपि वहदलघुस्नेहधारा इवार्द्रा
रुद्राक्षाबद्धहारा इव घनसरघावर्द्धितश्रेणिबन्धाः ॥१४९॥

मलयविलसज्जन्मा जन्मावधिद्रुममण्डलैः
सह च सहजप्रेमक्षेमक्षमं बहु निर्मिमे ।
मनसि पवनः स्मारं स्मारं तदेव शनैः शनैः
कुसुमविशिखा देशाद्देशान्तरं प्रतिपद्यते ॥ १५० ॥

धीरः पितापि मलयो मलयोपपन्नो
धीरस्तथैव विटपी सुरभिस्वभावः ।
स्थाने तदेष मलयाचलगर्भजन्मा
यन्माधवे भवति धीरनरः समीरः ॥ १५१ ॥

कुञ्जे कुञ्जेऽभिगुञ्जद्भ्रमरवति गजभ्रान्तितो दत्तझम्पः
पुन्नागानां प्रकम्पं जनयति विकसत्केसरासङ्गपिङ्गः ।
आरोहत्यद्रिशृङ्गं मनसिजरभसं वर्धयन्बम्भ्रमीति
क्षुत्क्षामो लेढि तोयं मलयगिरिदरीकेसरी गन्धवाहः ॥१५२॥

अलिश्रेणीवेणी स्तवकपरिपीनस्तनतटे
विकासे व्यानम्रा मुकुलपुलकव्याकुलतनुः ।
स्पृशन्तं वासन्ती पवनमुपकान्तं पिकरुतै-
र्धुनाना मूर्धानं न हि न हि न हीति स्थगयति ॥ १५३ ॥

क्रन्दन्मैलिन्दवृन्दं हरति सुमनसां भोगभागं परागं
माध्वीकं मुग्धधीः कः पिबति + + + + + + + + + + + +
+ + + + + + + + + + + + + + + + + + + + + + +
+ + + + + + स्मिन्प्रचलति पवने भावि को वेद कीदृक ॥१५४॥

लाटीवक्षोजशाटीं स्पृशति निविशते केरलीकेलिवाटीं
कार्णाटीकर्णनाटी भवति सह नटन्माधवीकुड्मलेन ।
काञ्चीनां पुष्पकाञ्चीं भजति सुमनसा प्रस्खलत्स्यच्छधूलौ
तैलाङ्गीदृग्विभङ्गीमनुभवति मधौ गन्धवाहो मदान्धः ।१५५।

पम्पाझम्पाप्तकम्पः शिशिरभरतया सानुकम्पान्तराणा-
मङ्के पङ्केरुहाणां विदधदनुगतिं पीतवान्प्राप्य माध्वीम् ।
मत्तो मत्तालिवत्तु स्खलति करुणयोत्थापिताश्लेल्लवल्ल्या
तामङ्गीकृत्य रङ्गी दलयति पवनः कश्चले स्नेहबन्धः ॥१५६॥

दृप्यत्पुन्नागनागः परिगिलितजगद्गन्धवाहोऽग्रवाहः
फुल्लाशोकप्रवाहः प्रतपनदहनारब्धदिक्चक्रदाहः ।
गर्जद्भृङ्गालिनिर्यद्भटभृतभुवनः कोकिलाकाहलानां
ध्वानैरासीद्वसन्तो नृपतिरिव वियद्व्यापितारापताकः ॥ १५७॥

रसालैराशालंकृतपिकरसालैरुदयते
रसालैराशालंकृतिरपि रसालं कृतिरपि ।
विशालाभिर्गीतव्यसनसुखशालाभिरिव तै-
रलीनामालीभिः सह सुरभिलीलाः प्रथयताम् ॥ १५८ ॥

घनानि च्छन्नानि भ्रमरनिवहेनोपरिसदा
सदारेणास्वाद्य प्रचुरमधु सम्भूय रसता ।

अदभ्राभ्राणीवाविरतरसवर्षीणि सुरभा-
वसीम भ्राजन्ते दिशि दिशि कुलानि क्षितिरुहाम् ॥१५९॥
अशोकानां प्रसूनानि प्रसूनेषोः शरा इव
अशोभन्त दलत्पान्थशोणिता शोणशोचिषः ॥ १६० ॥
चञ्चूपुटानीव न किं शुकानां पटूनि पुष्पाण्यपि किंशुकानाम् ।
सुरागभागीनि विदारयन्ति मधौ मनोबिम्बफलानि यूनाम् ॥१६१
(१)कोविदार कुसुमेन कोविदाः के विदारितहृदो न साधिताः ।
काम्पितेन पवमानझम्पतश्चम्पकेन भुवि के न काम्पिताः ॥१६२॥
भ्रमादुभ्रामन्तः स्फुटचम्पकेषु पक्षाहतोद्भूतरजोभरेषु ।
ज्वलच्छिखानां स्मरपावकानां पुष्पन्धया धूमधियं वितेनुः॥१६३॥

विरमतु नाम श्रीदामन्, किमनुवर्ण्यते कुसुमसायकसामन्तो वसन्तो हेमन्तोऽग्रसर इवानुभूयते सोऽयम् । यत्र खलु दिनपति-दैन्यावलोकनादिव दिवसा अपि शोकवशाः सुपरिजनोचिता-चरणीयमापिरे दैन्यम् । किमपरमम्भोजिनीप्रणयिन्यपि प्रियजन-परिभवदर्शनान्निधनमेव परं साधीय इति निधनमेव साधयामास पूर्वम् । अलिकुलमपि कमलवियोगादेव समाकुलीभूय भूमीषु भू-मीरुहेषु ककुभि नभस्यपि निःश्वस्य भूरि भ्रामं भ्रामं कलित-कमलिनीविच्छेदावसादोच्छेदाय दूयत एव केवलम् । परितो हिमसमयसमीक्षणक्षणादेव क्षणदापि क्षणदायिनी हिमानीमह-सो हिमानीमहा अपि क्षणदोऽभूत् क्षणदायाश्च, इति पुनर-नयोरेव दोषादोषाकरयोरसीमा भूमा बहुकालम् ।

(१) कचनार इति ख्यातस्तरुः ।

न भानोरुद्रेकः कमलकुलमुत्खातमभितो
हिमानीभिः स्मेरा सह चरति तारा सहचरी ।
अतो मन्दं मन्दं दिवि चलति चन्द्रोऽलस इव
प्रमोदाद्द्राघीयस्यजनि खलु हेमन्तरजनी ॥ १६४ ॥

महावंशोद्भूतः पदमपि महोच्चैरधिगतः
परद्रोहाच्चण्डं प्रतिफलमखण्डं कलयति ।
पराभूय ग्रीष्मेऽनिशमपि निशानायकमपि
प्रतिप्राप्नोत्येतत्फलमिह दिनेशः सह दिनैः ॥ १६५ ॥

पादे पतन्नपि नयेन निरीक्षितोऽपि
दोषाकरः स बत हन्ति पुरः सरोजम् ।
दीनं दिनं दिनमणिः पुनरित्थमाप
कुण्डोदरे पिपतिषुर्दहनोपकण्ठम् ॥ १६६ ॥

पद्मिनीविरहखेदकातरः पद्मिनीपतिरनायुरादरः ।
प्रत्यहं दहनमेति मृत्यवे मृत्युतोऽपि विरहोऽतिदुःसहः १६७॥

कुन्दमन्दिरगतोऽपि विन्दते नैव निर्वृतिलवं मधुव्रतः ।
आदे मधु न सस्वदे पदे शश्वदेव कमलस्य धावति ॥१६८॥

माकन्दवृन्दे विकचेऽपि कुन्दे स यत्र कुत्रापि विधिक्रमेण ।
बभ्राम मैलिन्दयुवा विरामं मनः पुनः केवलपद्मिनीषु ॥१६९॥

व्यतनुत सुधासेकानेकां विलासवतीं प्रति
प्रबलतुहिनक्रोडक्रीडत्तरो हिमवासरः ।
यदहनि मुहुः कान्तारान्तर्वसन्तमुपेयुषी
प्रियतमलंचक्रे निशामिव साधु सा ॥ १७० ॥

नीहारद्युतिदुःसहोऽग्रमिहिकाव्यग्रो हयानां गणो
दीर्घामित्यरविन्ददीर्घनयना तां याच्ते यामिनीम् ।
अन्योन्यं भुजसन्धिसन्धितवपुर्वक्त्रावसक्ताननं
निर्भेदं प्रतिपद्य गच्छति तयोर्व्याऽपूर्णदीर्घस्पृहा ॥ १७१ ॥

मृग्यते मृगदृशा मृगा[प्रिया]नने सा निशानभिमतैव कोकयोः ।
एकमेव बत वस्तु कुत्रचित्कालकूटकटु कुत्रचित्सुधा ॥ १७२ ॥

इति सरभसमभिलपितुमारभमाणो मुहुरपि मूर्धानमाधुनानो मधुरिपुरुपनीय कामपि स्मृतिमाकस्मिकीमाह श्रीदामानमुत्स्मिताननो नाम । अहो श्रीदामन्महदुपस्थितं महदुपस्थितं कौतूहलपरम्पराणाङ्कारणमसाधारणं किमपि ।

(१)न किं ते हेमन्ते हृदि भवति हे मन्त्रितगुरोः
कीशोरीणां चोलीहरणमुरु लाभादपि निधेः ।
द्रुमारूढो गूढः क्वचन रसमूढः किसलयै-
रपश्यस्तास्तोये जलमुचि चलद्विद्युत इव ॥ १७३ ॥

गच्छन्तीनां मृदुभुजलताश्रोणिबन्धाभिरामं
प्रातः प्रातर्मिहिरदुहितुः कूलकौतुहलायाः । [लीनाम्]
अर्वाचीनव्रजमृगदृशामङ्घ्रिभूषालिघोषा
वर्षन्तीव श्रुतिमधिसुधावर्षतोऽद्याऽपि ता मे ॥ १७४ ॥

वीतचोलमपकुन्तलबन्धं श्रान्तमम्भसि विदुर्न तदङ्गम् ।
चैलमोषमपि घोषकुमार्यः केलिमाहुरिह विस्मृतिमूलम् १७५॥

वीक्ष्य ताः प्रकुपितो विहरन्तीः स्वैरमम्भसि हिमे पवमानः ।

---

( १ ) गोपीवस्त्रहरणकथा भा० १० स्कं० २२ अध्याये ।

वर्द्धयन्निमिहिरजालहरीर्द्राक् व्यातनोद्गूरतनोस्तनुकम्पम् ॥१७६॥

एकदैव परिवृत्य पपातोड्डीय वारिनटितप्रतिबिम्बम् ।

अम्बरादिव तदम्बरभूमौ बल्लवीनयनखञ्जनपङ्क्तिः ॥१७७॥

दिङ्नभःपुलिनतोयतटान्तव्यापिनी व्रजवनीरमणीनाम् ।

स्मर्यते तदनुधा(१)त्राति धावद्दृष्टिपङ्क्तिरपरोत्पलसृष्टिः १७८॥

नीपशाखिनि तदम्बरमस्मान्वीक्ष्य ताः स्मितमधु व्यधुरन्तः ।

दन्तदष्टरसनाञ्चलमिष्टं तेन मुष्टमधुनाऽपि मनो मे ॥ १७९ ॥

ह्रीरुदेति सविरोधमुदग्रे याचितु वसनमस्तनाभिः ।

साऽपि चेदभिजिता मुखपद्मं नैव मुञ्चति मनाक्स्मितवन्धः॥१८०॥

काचिदेष सखि नन्दकुमारः कः क एवमपरां मुहुराह ।

पश्यति स्म बहु काऽपि निगूढं मां कदम्बमधिरूढमरूढा ॥१८१॥

अम्बरं वितर वातरंहसा वेपितं वपुरुपैति किं ब्रुवे ।

नीतमम्बरमखेलि कौतुकाज्जातमेतदिदमाह काचन ॥ १८२ ॥

इति मधुरमुदीरितगोपकिशोरीणामहमवधाय सुधातोऽपि रसायनमसाधारणमभ्यधां किमपि ।

धूलिधूसरमकारि समीरैरित्युपाहृतमिहैव नतभ्रु ।

एहि वस्त्रमिदमस्ति गृहाण स्वैरमेव न विरुणद्धि च कोऽपि ।१८३

पाणिमात्रवसनाऽपि गिरा मे वाक्प्रपञ्चविरमादुदतिष्ठत् ।

साऽप्ययाचत यदेत्यानिचोलं तत्तु सौरतसुखादपि काम्यम्१८४॥

मीलिताक्षमवनामितकुञ्चत्कायमौलिरचिताञ्जलिबन्धम् ।

तन्नमस्करणमस्ति मनःस्थं नित्यनव्यमिव गोपकिशोर्याः ॥१८५॥

---

(१) शत्रन्तसप्तमीयम् ।

अम्बरेण रहिता अपि तास्ताः पश्यति स्मितमुखं पुर एव ।
तत्तनूषु तरसा पुलकौघैर्गाढमक्रियत कञ्चुकबन्धः ॥ १८६ ॥
पार्वतीभजनकामितमन्तर्मण्डली मृगदृशामनुकूलम् ।
मद्वितीर्णमवकीर्णकदम्बं साम्बरं त्वमनुताम्बरमेव ॥ १८७ ॥
ब्रूत वामनयना व्रतकामं पृच्छतीति मयि ता मुहुरेव ।
नावदन्यदधिकोदितलज्जास्तेन नाभिदधिरे बत किं किम् ।१८८।
व्रतफलमुपलभ्य सुभ्रुवस्ता वसनजुषोऽपि न वेश्म गन्तुमैच्छन् ।
मयि कृतसमये कथं कथञ्चिन्निजभवनं ययुरङ्घ्रिभिर्न चित्तैः १८९

वामभ्रुवः प्रचलिता अपि ता गृहेषु
भ्रान्त्या वनं विविशुराययुरापगायाम् ।
हित्वा विभूषणमुपेक्ष्य पुनस्तदादु-
रातेनिरे मयि च दृष्टिसरोजवृष्टिम् ॥ १९० ॥

यां तु चिन्तयति गोपकिशोरी बिभ्रती मम वरं वरमन्तः ।
सा शरज्जयति हंसनिनादैः पुष्पकेतुमभिजागरयन्ती ॥१९१॥

इति सरसवादमादरादभिधाय सायमवधाय माधवो धेनु-धोरणीमादाय मोदाय च निखिलचराचराणामनुवादयन् माधुरीणामधरीकरणमधुरीमधुरीणाधरलीनामुरलीमुरुलीलयानुशीलयामास बल्लवावासम् ।

अथ कदाचिदभिरामारामभूमिरुहग्रामच्छायाकुलविश्रामधामसु यमुनाकूल एव तरुणतरकदम्बतरुमूलेष्वनुकूलेष्वभिनवजलदतमालकोमलकमनीयनीलिमानं नीलमणिमानमानयन्तमधो मधुसूदनं तमेकाकिनमावसन्तं समतीतत्रिभगवया अ-

पि प्रतिभाप्रागल्भ्यस्फुरदधरपुटीतटीव पटीयसी काऽपि शनैः शनैः समुपतस्थे रहःस्थमाभीरी । आगत्य चावलोक्य चाह-अहो नन्दनन्दनोऽसि, भवन्तमनुसन्धायानुसन्धायान्धेव कति कति दुरध्वनोऽभिधावन्ती धीरेतरदतिश्रान्तास्मि । तदहं क्षणं विश्रान्तिसुखमनुभूय निवेदयिष्यामीति । हरिरन्तश्चिन्तयति । अहो समजनि कोऽपि कुतूहलानामयं पन्था भवतु नाम ।

अयं तत्सम्बन्धी यदि भवति पन्थाः समुदितो
मदन्तर्याश्चिन्तामनुभवति चिन्तामणिमिव ।
अकस्मादस्माकं सदयमनुकूलेन विधिना
तदा जाने पाणेरुपरि निधिरानीय घटितः ॥ १९२ ॥

अथ वल्लवी निवेदयति-

अधिवेणु तनोषि नन्दसूनो मृदु[झं]कारमवारमप्रयासः ।
नवगोपचमूरुलोचनानां हृदि दावानल एव जाज्वलीति॥१९३॥

नीतमम्बरमनीतिरीदृशी दहते(१)दहन एव दाहभूः ।
अम्बरं वितर तेन सम्वृताः सन्तु गोपसुदृशोऽपि निर्वृताः॥१९४

नन्दनन्दन ? भवान्निरञ्जनः सन्तु खञ्जनदृशो निरञ्जनाः ।
त्वत्समानविधिनैव किन्तु तत्तापसन्ततिकथासु विस्मयः ॥१९५॥

अहो अनुरागातिशयो नाम ।

वरमम्ब वरं वृणे कुमारं व्रजराजस्य किशोर[कं]व्रजस्य ।
अभिधातुमिदं पुरस्तु देव्याः पुलकव्याकुलविग्रहा न शेके१९६

सुतनोरास्यमहास्यं नयनमलास्यं तनूरनाभरणा ।

(१) आत्रात्मनेपदं चिन्त्यम् ।

प्रतिवृन्दावनभवनं विलुठति धूलीषु धूसरीभूय ॥ १९७ ॥

तन्द्रीं चन्द्रमुखी जहौ भयमधाच्चन्द्राच्चन्द्रावली
राधा त्वाधिपयोधिमध्यपतिता लीलावती मुह्यति ।
कालं चैककलावती शशिकलाग्रस्तैवमास्ताशया
गौरी गायति ते गुणं गुणवती गाथा च शेषायते ॥१९८॥

कलधौतलतेव काप्यकम्पा भुवि शम्पेव चिर परा चकम्पे ।
अपरां प्रति चाम्पकीव माला बत हालाहलमेव वर्षतीव ॥१९९॥

पिदधाति परा सुधाकरे कृतवातायनभेददीधितौ ।
वहदस्रमजस्रमाकुलः प्रणिधानैकधनः सखीजनः ॥२००॥

मदना मदनानलावलीढा विषयः कामरुषोऽपि कामसेना ।
ललिता ललितानि विस्मरन्ती तव रूपैकनिरूपणं कुरुते॥२०१॥

दिवसादिव सा भयं निशातः कलयामास कलेशचन्द्रिकापि ।
कमला कमलादपैति कामं बत वामं कमहो वयं वदामः ॥२०२॥

व्यजनैर्विजनैः सखीजनैः सजनैः सद्मभिरङ्गमार्जनैः ।
न हि निर्वृतिमाददे क्षणं शरविद्धेव मृगी मृगीक्षणा ॥ २०३ ॥

अटवीविटपी विलूनशाखः सरसी निःसरसीरुहा बभूव ।
उपचारविधौ विधौ हि वामे बत वृन्दावनवामलोचनानाम् २०४

सौगन्ध्यैरलिमन्धपाञ्शिशिरयन्नप्यङ्गमासङ्गतः
शम्पायाः स्मरसम्पदः समुदभूत्कम्पाय पम्पानिलः ।
निःश्वासैः सह दुसहः पुनरसौ तस्याः सखीनां क्षणा-
दुत्तापं रचयाञ्चकार जगतां ज्वालेन दावानली ॥२०५॥

बहु वर्षति चन्दनं सखी मनुते भानुमती हुताशनम् ।

तदनङ्गकला कलेवरेऽजनि धूपैः श्वसितेन धूयते ॥२०६॥

करतलप्रमिलत्कपोलपाली नयनाम्भोलहरीभवत्कफोणिः ।
अचलत्तनुवल्लिनिर्निमेषा शशिलेखा लिखितेव लक्ष्यते सा॥२०७॥

अक्षि चन्द्रमसि वर्ष्म मारुते कर्णमर्पयति कोकिलारुते ।
किं करोमि विरहेण कातरा वाममाचरति कामकन्दली ॥२०८॥

बहु यच्छति पल्लवं नवं परिदाह्योऽयमिति क्रुधा मुधा ।
भुवि दर्पणबिम्बबिम्बिते सति चन्द्रे चकितेव सुन्दरी ॥२०९॥

गमनेन सहैव नन्दसूनोर्व्यसनापन्नमनोभिरङ्गनाभिः ।
भवतः करतः करे गृहीतो नवनीलस्मरशस्त्रकालसर्पः ॥२१०॥

स्पन्दमात्रहति चेन्मणिबन्धः प्रत्ययो भवति चेतसि बन्धोः ।
जीवनीयमिति जीवित भूयः किं निवेद्यमनवद्यगुणायाः॥२११॥

वेणुगीतमधिगत्य दूरतो द्वारतोऽपि बहिरङ्गणादपि ।
आगता अपि न शेकुरस्रुभिर्नेत्रवर्त्मनि गते त्वयीक्षितुम् ॥२१२।

उपपद्य तदेव दंदहीति ज्वलनः प्रेम च वामलोचनानाम् ।
स तु नीरस एव सारसाक्ष त्वयि तास्ताः सरसाः परं गरीयान् २१३

भूतमेकमपस्नेहं दंदहीति हुताशनः ।
पञ्चभूतानि भूतानां प्रेमायमपरोऽनलः ॥ २१४ ॥

किमखिलमभिधेयमित्थमाकुलमेव सकलं वृन्दावनगोपकिशोरीवृन्दम् । परन्तु वृषभानुकुलजलधिजनिरप्रतिरूपरूपरसकन्दली राधा संसारासाधारणमाधुरीधामपरमसुखसाधा बाधावशादावेदयामास मे किमपि गूढम् ।

तरुस्कन्धारूढः क्वचन दलगूढः सरभसं

पयोमानाः पश्यन्वसनरहिताः स्मेरनयनः ।
अकस्मादेवास्मन्नयनपथिकोऽद्यापि हृदि मे
स मेघश्रीमोघीकरणरुचिरकोऽधिवसति ॥ २१५ ॥

दलयत्यनिलोऽपि देहमिन्दुर्नयनेन्दीवरमेव दंदहीति ।
गिरमुद्गिरतीव कोकिलापि भ्रमरोऽपि भ्रमरोपमातनोति॥२१६॥
भवनं च वनं च निर्विशेषं विषमेषुर्विषमेव वान्हिरिन्दुः ।
अलयः मलयप्रवर्त्तिनोऽमी फणिफूत्कारगणः समीरणोऽपि२१७

इति विदितानिखिलान्तस्तत्त्वा तत्तापयापनग्रहिला भवन्तं महौषधमिव मृगयमाणाचिरेण प्रतिपद्यमानाऽस्मि । समुचितमत्र-धीय माधव ? विधीयतामचिरेण । अथ स्मितमधुरमुखेन्दुर्नन्द-नन्दनस्तामुवाच मधुमुचा वाचा ।

अवधेहि विधेहि राधिकाया हृदि बाधाप्रशमं मदीयवाचा ।
सुदृशामिह विप्रयोगवन्हौ प्रतिकारः प्रियवत्प्रियप्रियोक्तिः २१८

श्रुती राधानामश्रवणसमकालं पुलकिता
मनोऽभून्निर्मग्नं प्रमदजलधौ मे निरवधौ ।
दृशौ दृश्युत्कण्ठे वपुरपि तदासङ्गरसिकं
मदात्मा तादात्म्यं भजति भणितैर्दूति तदलम् ॥ २१९ ॥

विगाढव्यालीढा सुखयति हि पीयूषसरसी
दृशीन्दोरागूढा कलयति कला कामपि मुदम् ।
श्रुतापि ध्यातापि प्रथयति परानन्दलहरी-
परीणाहं राधा परमियमसाधारणानिधिः ॥ २२० ॥

शीतांशोरपि शीतलं सुमृदुलं सम्यक् शिरीषादपि

द्राक्षातोऽपि विलक्षणं सुरधुनी क्षीरादपि क्षेमदम् ।
माध्वीकाधिकमाधुरीकमधरीकुर्वत्सुधासौभगं
राधानाम मनोभिराममपरं वस्तु प्रशस्तेः पदम् ॥ २२१ ॥

अभ्युत्थानविधानसाधनपदे पाणी धनुर्योजितौ
विश्वोद्वीक्षणवीक्षणे च हृदयात्मानौ च बाणो धनुः ।
मध्वीकं च सुधा च पुष्पधनुषो बाह्यान्तराप्यायिनी
दिव्ये नव्यमहौषधी विजयते राधेति वर्णद्वयी ॥ २२२ ॥

अयि खलु (१) संचारिणि नामानुक्रमेणानुमीयते रूपमपि तस्याः। निरूपणीयेतरदेवस्याखिलस्यापि आभीरी सोल्लासं निवेदयामास ।

तद्धम्मिल्लरुचा शुचातिविधुरा चक्रन्द कादम्बिनी
धारास्रैश्चमरी च काननचरी भूता(२)लिरुच्चामरम् ।
गाहन्ते कुसुमान्तराणि मधुपास्तापी कलापी वने
मर्त्तुं द्राक्कवलीकरोति गरलव्यालोलमाशीविषम् ॥२२३॥

नन्दनन्दन ? तदाननत्विषा यत्तुषारकिरणो मलीमसः ।
उस्रमस्रकमदस्रमुत्सृजन् शून्य एव चिरमेत्र घूर्णते ॥२२४॥

राधिकामुखमुदीक्ष्य लज्जयामज्जदम्भसि मुमूर्षु वारिजम् ।
तत्र वार्यवरुणद्धि यद्धि तं चञ्चरीकविषमित्युपाददे ॥ २२५ ॥

आननेन विजितेन्दुमाधुरी लोचनेन च हृतैणचातुरी ।
एतयोरिति मिथो युतिर्यतः सन्धिरुल्लसति तुल्यतापयोः ॥२२६॥

---

(१) "दूतीसंचारिके समे" इत्यमरे ।

(२) आलिर्वयस्या ।

चाञ्चल्यं खलु खञ्जनेषु हरिणीनेत्रेष्वपि द्राघिमा
सौभाग्यं सरसीरुहेषु शफरीवृन्देष्वमंस्त श्रियः ।
किन्तु श्रीवृषभानुभूनयनयोः कोणेऽपि को नेक्ष्यते
वैदग्धीमहिमा जयन्ति हि चतुःषष्टिः कलाः सृष्टयः ॥ २२७ ॥

एकार्द्धं स्तनपाणिपादनयनभ्रूकर्णगण्डस्थलं
भिन्नार्द्धस्फुरितस्य तत्तदखिलस्यौपम्यमालम्बते ।
इत्थं खञ्जनगर्वगञ्जनदृशस्तस्या यदि स्यात्तुला
स्यादङ्गस्य तदा द्वितीयरहितं यत्तद् द्वितीयं हि तत् ॥२२८॥

स्थलाम्भोजे रम्भायुगमितविपर्यासमवनी-
नभः कूपे वल्ली तदुपरि बभौ कोकमिथुनम् ।
त्रिरेखन्दुश्चेन्दीवरमपि कलेन्दोरथ तमः
श्रुता वा दृष्टा वा न खलु भुवि सा सृष्टिरपरा ॥ २२९ ॥

हरिस्तु सपुलकमनुभूतमुद्भावयामास ।

चलन्ती पादार्धं वलदलसभारा यदवद-
द्वयस्यः किं हास्यैः कथमिह विधास्ये गतिविधिम् ।
उदञ्चत्कालिन्दीलहरिरधुनान्दोलयति मा-
मनभ्यासादभ्यागतमिव तदद्यापि हृदि मे ॥ २३० ॥

दहने हेमपरीक्षा प्रेमपरीक्षा परं विरहे ।
द्वयमपि दहति द्वितयं द्वितयं द्वयमुज्ज्वलीकुरुते ॥ २३१ ॥

अनुसंचर संचारिणि संचारय चारुलोचनामचिरात् ।
घनकुचजघनभरार्त्तां बिभ्रत्तां न चक्षमे गन्तुम् ॥ २३२ ॥

सपुलकमाभीरकुशलकिशोरीसंचारिणी भणति स्म ।

समैव द्वयोः प्रेम समैव विरहव्यथा।
समावस्था समैवोक्तिः समयोः समुदञ्चति ॥ २३३ ॥

रसिकपुरन्दर ! पशुपपुरन्दरानन्दसन्दोहसन्दीपन तव संदेशार्पणसुधाभिषेचनादावर्त्तयामि राधाया विरहबाधातो निर्गच्छतः प्राणान्।

अथ मधुमथनमधुरतरानुवादमादरादनुस्मरन्ती सविस्मयं मन्दं मन्दं पथि गच्छन्ती मूर्द्धानं मुहुराधूनयन्ती चेतसि चिन्तयामास किमपि मुहुराभीरी।

दृष्ट्वा विग्रहसौभगं रतिपतिव्रीडावलीढं तरो-
रालीढां तनुमत्यजत्सह धनुर्भ्रूभङ्गभाजो हरेः।
मर्यादां च कुलव्रतं च विपुलं धैर्यं च हित्वाभव-
त्स्थाने तद्यदिमं प्रति व्रजसरोजाक्षीकुलं व्याकुलम् ॥२३४॥

न कूले कालिन्द्या न च पटुनि मूले विटपिनां
निकुञ्जे नो गुञ्जन्मधुलिहि मनो निर्वृतिभवः।
समन्तात्पन्थानं मुहुरपि दिगन्तान्कलयतो
गतायामाभीर्यामुदभवदधैर्यं मुरभिदः ॥ २३५ ॥

कलङ्ककणकैतवाद्भुवनजैत्रलेखाङ्कितः
शशी कुसुमधन्वनो विजयकेतुरभ्राजत।
तमोजलधिकुम्भभूर्विरहिधूमकेतुर्दृशां
प्रसाधनसुसाधनं स्तवककर्णभूषा निशः ॥ २३६ ॥

क्वचिद्भ्रमरभाङ्कृतिः क्वचन चन्द्रिकाहङ्कृतिः
क्वचिद्विकचमल्लिका नवदला क्वचिद्वल्लिका।

क्वचित्कुमुदिनीवनीसुरभिरेति शीतोऽनिलः
कृतं मुरभिदः शरैः स्मृतिभुवा विलूनं मनः ॥ २३७ ॥
त्रियामायां यामे गतवति विरामे जनगता
गतानां हृद्दामे शकलयति कामे च विशिखैः ।
जगद्धैर्यध्वंसी सह ललितहंसीगमनया
रिरंसी श्रीवंशीमकृत शरणं शीलितवनः ॥ २३८ ॥
धैर्यं निर्दलयन्मनो विकलयन्प्रसङ्गमुत्तुङ्गयन
लोमाञ्चं परिपञ्चयन्नपि मनोजन्मानमेणीदृशाम् ।
मन्दं मन्दमुदञ्चति स्म जगतीमस्पन्दयन्मन्दय-
न्वातं श्रीवृषभानुभूगुणगणांशंशी स वंशीरवः ॥ २३९ ॥
धूलीधूसरिता धरासु शयिता व्यस्ताः समस्ताः क्षणा-
दुत्पेतुर्मुरलीमनोज्ञललिता धाराभिरारात्स्त्रियः ।
द्राघीयोदिनदुर्धरारुणकराक्रान्ताः समन्ताद्यथा
सान्द्राभिर्निशि चन्द्रिकाभिराचिराद्धद्धालयः शालयः ॥२४०॥
वर्त्मावर्त्म विदुर्न किन्तु मुरलीसंगीतभङ्गीकला-
मङ्गीकृत्य हरेः कुरङ्गनयनाः सर्वाः समं निर्ययुः ।
उल्लङ्घ्यापि निसर्गदुर्गपदवीं दुर्वारधारामुचां
धाराधोरणिधूयमानधृतयो नद्यः समुद्रं यथा ॥ २४१ ॥
आययुर्मृगदृशो निशि कुञ्जं मञ्जुगुञ्जदलिसाञ्चितपुञ्जम् ।
कामकोटिकमनीयतमश्रीः श्रीपतिर्जयति यत्र रिरंसी ॥२४२॥
एकाकिनी भवनतो बहिराजगाम
नाम व्रजप्रणयिनी प्रियपीतचेताः ।

वर्त्मान्तरे पुनरनेकसहस्रसंख्या
संख्या बभूव सविधे मधुसूदनस्य ॥ २४३ ॥

पुरुप्रेमभाराः पुरा निर्विचारा वनं भेजिरे सुभ्रुवः कान्तिसाराः ।
प्रभासंपदारब्धचाम्पेयकम्पाः पृथुप्रावृडभ्रं यथादभ्रशम्पाः ॥२४४॥

नभः पूर्वशैलादिवापूर्वशोभाः शुभाः सर्वतारा विधुप्रेमलोभाः ।
वचोहीणवीणा नवीना प्रवीणा वनं वेश्मतोऽगुर्गणा वल्लवीनाम् २४५

अपश्यन्न यस्मिन्न देहालसेहा महाहेमहाराञ्चितं वीतगेहाः ।
मुकुन्दं मुकुन्दादमन्दाभदन्ता भृशं तापहन्तारमेकान्तकान्तम् ॥२४६॥

दृष्ट्वा दिष्ट्यैव दृष्ट्या कुवलयसुभगं गञ्जिताम्भोगसृष्ट्या
तुङ्गैरङ्गैस्त्रिभङ्गीं विदधतमनृजुभ्रूविभङ्गोत्तरङ्गम् ।
मूले नीपस्य कूले दिनमणिदुहितुः कोटिकन्दर्पदर्प-
द्रोहं मोहं दधुस्ताः क्व वचनरचनावामना निर्जगाम ॥२४७॥

अथ संचारिणी चारुचातुरीमाधुरीतिभिः ।
राधामाधाय सविधेऽभिदधे रसवारिधेः ॥ २४८ ॥

इयं राधा बाधाशतमपि समाधाय भवना-
द्वनान्तः कान्तारैः कथमपि तवानायि सविधे ।
खलश्रेणीमध्यान्मणिरिव समिद्धाहिशिरसो
रसोपेत्य प्रीत्यै तव मम विधेयं च व्यरमत् ॥ २४९ ॥

अमुष्याः किं ब्रूमो गतिशिथिलताः किं मृदुलता
निशोऽनैषीद्यामं कियति पथि याता श्रमवती ।
जहौ दाम क्वापि क्वचन मणिमञ्जीरमपरं
क्वचित्किञ्चित्किं तैस्त्रिभुवनविभूषा स्वयमिति ॥ २५० ॥

सा चित्रलेखाजनि चित्रलेखादुभूतामिताभामनुभूय भूयः ।
तिलोत्तमा नैकतिलोत्तमा सा मदालसा वीतमदालसैव ॥२५१॥

मेना मे नाङ्कलक्ष्मीमपि च पथि न ते कुर्वते लोचनानां
ये त्वासां हेमभासा सुमुखविविधविशादू दृक्पथे निष्पतन्ती ।
रम्भा रम्भेव यासां भवति गणनया सोर्वशी चोर्वशी सा
श्रीसाम्यं भूरिकाम्यं मनसि वितनुते का शची का घृताची॥२५२।

सर्वासां भावमासां भृशमभणमिमाः श्राविताः स्थापितास्ते
वंशीध्वानैः सुधाभिः श्रुतिबिलविलसद्द्वारतोन्तर्मताभिः ।
अम्भोदस्निग्धमुग्धध्वनिभिरिव हरे चातकास्तत्यकालं
चण्डांशुत्तापितास्ताः स्फुरदधररसैः प्रापिताः पारयन्तु ॥२५३॥

न हि स्नेहो देहे रतिरपि न गेहे स्मृतिरपि
त्वदन्यस्मिन्यस्मान्मतिरपि तदस्यामिति हरे ।
अमूषां यास्तोषा गणितगुणदोषा निरविश-
न्नरण्ये स्वैरिण्यः किमपरमनन्यैकशरणाः ॥ २५४ ॥

अलमलमतुलितजलवाहव्यूहसुभगकलेवरवागजालैरहमासामविरतविरहप्रतीकारपरिचर्यापर्याकुलास्मि, चिरपरिजागरसागरावगाहविकलास्मि, क्वचन तरुतलावलम्बिनी यामिनीमपयापयामि निद्राभिनवदरिद्रा । वचोगणाविनिस्यूतमनाः श्रीमधुसूदनो दूत्या स्मितनोहारिभूत्याह परिमोहयन् । तव सविधचरी वृषभानुकिशोरी काननचरीभूयानुभवति सहचरीभावम् । एता अपि तावदाभीरवरनागर्यो धैर्यौदार्यसौकुमार्यैकभूमयोऽनुभूयन्ते निकटचर्य्य एव आज्ञापालनकर्य्य एव । एतासामपि जननीजन-

नीतिविलक्षणसम्बन्धविशेषभागिनी भाविनी भवती एताः पृच्छतु कथमेकान्तविजनतया नगरबाहिस्तया च तरुणतरुखण्डमण्डितया च मण्डप इव क्वचिदपि निकुञ्जपुञ्जरञ्जितवने समासीनमुदासीनमिव मामनुमादयति। वावदूके ? भवति तदहो न लौकिकं न वैदिकं चैतत्। दूती तन्निहितमन्यार्थयन्ती विज्ञापयामास।

उभे एताः खलु दास्य एव, आसामिनत्वादुपपन्नमेवोदासीनत्वम्। कथमुदासीनमौदासीन्यमेतासु प्रकाशयति।

उन्मूलयति हृन्मूलं मुरली खुरली तव।
उदासीनत्वमासीनो वने त्वमवगाहसे॥ २५५॥

नन्दनन्दन ? ते वंशी वतंसीकृत्य निःस्वनम्।
समुदासीनयत्येव हरिणीरपि कामिनीः॥ २५६॥

प्रवालश्रीभारं लघयति पदाम्भोरुहरुचि-
स्तिरश्चक्रे चञ्चन्नखरकरचक्रं मणिरुचः।
निचोलं ते चामीकरकिरणवामीयतितरा-
मुदासीनो नो चेत्त्वमसि विमुखो वस्तुषु कथम्॥ २५७॥

अथ दूतीवाग्भङ्गीमवधाय विस्मयमङ्गीकुर्वाणो हरिराह। अयि खलु दूति तव वाग्भङ्ग्यैव गोपकुरङ्गीदृशो वनजुषो विधीयन्ते स्म। दूतीचतुरशिरोमणे नमस्तुभ्यम्। अहमतः कुत्रापि विश्रान्तिमनुभवामीति तथा विदधे। हरिराभीरीभिरभितो विहारिणीभिः, सौदामनीभिरिव निविडनवाम्बुवाहः, करेणुभिरिव करियूथपस्ताराभिरिव ताराधिपः, परिवेष्टितो वनभुवि विजहार बहुवेलम्।

जालं मनः प्रेमपयोधिमानमुद्धर्त्तुकामेन मनोभवेन ।
व्यतानि लोमाञ्चमिषान्मुरारेर्गोप्याश्च गाढं परिरम्भणेन॥२५८॥

प्रौढप्रेमतरुप्रसूनमुकुलप्रायं प्रमोदार्द्रयोः
प्रस्वेदाम्बुकणावलम्बपुलकाभोगं बहिर्भावयन् ।
अन्योन्याधरमाधुरीजलनिधावन्योन्यमाधापयन्-
राधामाधवयोश्चिरं गुरुपरीरम्भः स्म सम्भासते ॥२५९॥

पश्यन्कामपि सस्मितं मधुमुचा वाचा विसिञ्चन्परा-
माकर्षन्नपरां पटैः स्तनतटे काञ्चिन्नखेनोल्लिखन् ।
चुम्बन्कामपि नाम कामपि समालिङ्गन्स तुङ्गस्तनीं
रामोल्लासवशीकृतो दिविषदां चिक्रीड चूडामणिः ॥२६०॥

अहो कौशलमाभीरकिशोरीकेलिसम्पदः ।
कायव्यूहमुरीचक्रे चक्री यदनुभूतये ॥ २६१ ॥

प्रतिगोपीद्वयमध्यस्थितमाधवरासमण्डलं रेजे ।
कनकसरोजावलितं जगत इवेन्दीवरं दाम ॥ २६२ ॥

व्रजमहिलापुटपुटितं व्रजपतितनुराजिमण्डलं रेजे ।
वृतमिव कनकलताभिः श्यामलमणिकन्दलीचक्रम् ॥२६३॥

चक्रमुल्लसतति गोपकिशोरीवर्ष्मभिर्घनरुचोपघनानाम् ।
चन्द्रकालिभिरिवाहिरिपूणां बर्हमण्डलमखण्डमण्डले ॥२६४॥

राधया सह रराज माधवो मध्य एव मदमुग्धसुभ्रुवाम् ।
वर्द्धमानपरिधेरिवान्तरे रोहिणीसहितरोहिणीपतिः ॥२६५॥

कल्पितं रहसि तत्क्षणक्षणस्पन्दनन्दमुतसुन्दरीजनैः ।
मेघमण्डलमकम्पशम्पया सम्प्रयातमिव चक्रमावभौ ॥२६६॥

शिञ्जन्मञ्जीरकाञ्चीमणिमयवलयं गण्डपालीविलोलो-
त्तंसं दत्तप्रशंसं मुहुरपि हरिणा नर्त्तितं वल्लवीभिः ।
गीर्वाणार्वान(१)नाद्या दिशि दिशि कुसुमं जातहर्षा ववर्षुः ।
केचित्केचिच्च चित्रार्पितवपुष इवातेनिरे श्रोणिदन्घम् ॥२६७॥
श्रोणीबिम्बेषु काञ्चीकलकलकपटाद्युध्यतो वल्लवीना-
मुच्चैरुच्चैरवाधिं स्मरधरणिपतेर्डिण्डिमाडम्बरेण ।
अप्यासां वाहिनीनामिव समरसमालोकनात्तोषभाजः
प्रेमाम्भःपूरदम्भादुपचित्तमभितः पुष्पवर्षोत्करेण ॥२६८॥
वेणीश्रेणीभिरेणीशिशुचपलदृशां ताडितं कैटभारे-
र्देहेष्वत्यर्थनृत्यभ्रमिरभसभरैः सर्वतः मार्पिताभिः ।
चेतोभूभूमिजानेश्चिरविरहवशाद्रोषभाजः कशाभिः
कुर्वाणस्येव दण्डं पुनरिह विरहाभावसम्भावनाय ॥२६९॥

अथ मधुरिपुराभीरीरासरभसरसमनुभूयासां विरहवशा-
त्प्रेमाणमुद्दीपयिष्यन्निव विरहविकृतोक्तिमाकर्णयिष्यन्निव रा-
धायामसाधारणं प्रेम सन्दर्शयन्नन्तर्दधे सह तया स तत्रैव ।

पुलिने पुलिने वने वने यमुनायाश्च तटे तटे चरन् ।
विजहार सहैव राधया स्पृहणीयः स्पृहयेव मूर्त्तया ॥२७०॥
कुसुमाय च पल्लवाय चैषा स्पृहयामास कुतूहलेन यस्मै ।
उपहृत्य जलस्थलद्रुमेभ्यस्तनुमस्याः किल भूषयन्स तेन २७१
विदितश्रमवारिबिन्दुवृन्दं वपुरिन्दीवरचारुलोचनायाः ।
क्षणमम्बुरुहेण सोदरेण क्षणमावीजयदेव दानवारिः॥२७२॥

(१) अर्वानना अश्वमुखाः किन्नराः ।

घनयोः स्तनयोश्चकार हारं कवरीगर्भकदाम चाततान् ।
जघनस्य च मेखलां व्यतानीत्त्रुटितेषु स्फुटमेषु मल्लिकाभिः २७३
श्रवणे जघने स्तने च मल्लीमयभूषाः स्वयमेव संविधाय ।
श्रमसंचरसंभ्रमेण भूयः कतिधामार्ज्जि मुधा न माधवेन ॥२७४॥
रभसश्रमगौरवाकुलाग्रालकसज्जीकरणेऽभिषज्यमानः ।
स तु तान्द्रुतमेव दुर्व्यवस्थांश्चपलानेव चकार कम्प्रपाणिः ।२७५।
मृगनाभिरसेन राधिकाया मुखचन्द्रे मकरीं चिकीर्षुरासीत् ।
न शशाक चिरेण कर्तुमीशोऽप्यहह स्वेदतरङ्गधौतलेखाम् ।२७६।
त्रुटितेऽपि हठेन गाढनीवीगुणबन्धे मणिमेखलामयूखे ।
मुहुरम्बरशङ्कया स तेन बत नीवीपरिमोचनानुबन्धाम् ॥२७७॥
घनयोः स्तनयोः सुपीनयोरपि मुक्ताफलदामहीनयोः ।
निदधे न हि दाम माधवो घनघर्माम्भसि तद्भ्रमाकुलः ॥२७८॥
अन्तर्दधति मधुद्विषि हिमरोचिषि रोचमानेऽपि ।
विगतासव इव सर्वा निर्व्यापारास्तमो ददृशुः ॥ २७९ ॥
निद्रितेव विनिपत्य भूतले धूलिधूसरवपुः समाकुला ।
एष याति स इति प्रलापिनी काऽपि नीरजमुखी समुत्थिता।२८०।
भूतले पतितया शुचाढया स्वप्नतो हरिमुपेत्य मूढया ।
शून्य एव परिरभ्य निर्भरं दोर्द्वयेन परयापि निर्वृतिः ॥ २८१ ॥
ध्यानलब्धपरिरब्धमुकुन्दानन्दतुन्दिमवलत्तनुवल्ली ।
काऽपि दीर्घनयना नु सुदीर्घयोगिनीव परमैहत नैव ॥ २८२ ॥
माधवेन रयतोऽभिधावता धावितुं सपदि साक्रमक्षमा ।
अन्वगात्तमतिमन्दगामिनी देहभारमपहाय कामिनी ॥ २८३ ॥

धूलिधूसरितचारुपल्लिका वल्लिका इव निकामसुभ्रुवः ।
अभ्रतो विगलिता इवालयो विद्युतां भुवि नता विरेजिरे ।२८४।
एक एव मिलने मुरवैरी तन्मयं तु विरहे जगदेव ।
इत्यमन्यत वरं विरहं सा कापि साधुगतिगञ्जितहंसा ॥ २८५ ॥
काकलीभिरचिरेण कोकिला व्याकुलाः श्रुतगताभिरङ्गनाः ।
शूलपालिभिरिवात्यहंक्रिया झंक्रियाभिरलयोऽप्यकुर्वत ॥२८६॥
समवोधमतयो बत शून्या वीक्ष्य सर्वहरितः परितस्ताः ।
सैकते पदपदानि पदव्यां कुर्वते स्म मृगितानि मृगाक्ष्यः ॥२८७॥
अङ्कुशध्वजसरोजसुवज्रव्यज्यमानचरणाङ्कमशङ्काः ।
वीक्ष्य वीक्ष्य पुलिने यमुनायाः काननानि विविशुः कुसुमानाम् २८८
आलि पश्य वनमालिपदाङ्कं वज्रपङ्कजसरोरुहध्वजधाम ।
ऊचुरेष सुखयत्यपि गाढं पीडयत्यपि मिथो मुहुरेवम् ॥२८९॥
इदमच्युतपादलक्ष्मणः सविधे लक्ष्म परं च लक्ष्यते ।
गुरुगुल्फपदेऽल्पमग्रतः सखि दुःखोपरि दुःखमादधे ॥ २९० ॥
केवलं मधुरिपोरिदमास्मिन्पादयोः पदमुदेति विगाढम् ।
प्रेयसीमयमुवाह सरागस्तर्कयामि लतिकामपि नागः ॥ २९१ ॥
रसालसां प्रेमवशां विशालश्रोणीभरां पीनपयोधरां च ।
निष्कम्पशम्पामिव वारिवाहः समं जडिम्ना खलु तामुवाह २९२
अस्पन्दमानाङ्कमबन्धनीवि स्विद्यत्तनूद्भिन्नतनूजराजि ।
हैमीव रेखा निकषान्तराले बालेयमङ्के निममज्ज शङ्के ॥२९३॥
पुनः पदानीह तयोः पदानां पुरो भवन्त्यालिदृशोः पदानि ।
रसालसत्वादवशो न शेके पदात्पयातुं स पदान्तराणि ॥२९४॥

पणीकृतप्राणकुलादिकाथा यो दृष्टिभारं मम नैव सेहे ।
उवाह यामालि तमालनीलः स एव सृष्टेरुपरीयमिष्टा ॥२९५॥
इदमालि धृतालिमालकं हरिलीलाकमलं महीतले ।
महदस्त्रमिवानुभूयते भुवनोन्माथिमनोजभूपतेः ॥ २९६ ॥
विदधे रभसेन ताडनं कतिधानेन मुधा न माधवः ।
समवीजयदप्युरःस्थलीः सखि केलीष्वमुनैव कोटिधा ॥२९७॥
अयि नीरजमेदिनीतले पतनं सत्यपि साधु जीवने ।
नहि जीवनमेव जीवनं प्रिययोगं हि वदन्ति जीवनम् ॥२९८॥
सखि शोणमशोकपल्लवं कलयामास नवं स पल्लवः ।
अथ कञ्जमसुञ्चदञ्जसा सुदृशासज्य कयापि मामिव ॥ २९९ ॥
उरसि श्रवसि स्वयं दधे शतधास्येऽपि करे सहस्रधा ।
अधुना स्वयमौज्झदम्बुजं प्रभुरागो हि न सर्वदा स्थिरः ॥३००॥
मम शोकमशोक खण्डय स्वयशोभिश्च दिशोऽभिमण्डय ।
सफलीकुरु नाम तन्निजं प्रथयालोकपथं मधुद्विषः ॥३०१॥
इदमार्द्रमुदीक्षते नखक्षतमङ्गे तव मञ्जुवञ्जुलः ।
यददत्तकरं त्वयाश्रवस्त्वमशोकास्त्वियतैव गीयसे ॥ ३०२ ॥
त्यज मौनमशोक शोभते नहि मौनव्रतमार्त्तिवार्त्तिषु ।
इयमाह हरेः समागमं विरहः प्रापि तवैव दुःसहः ॥ ३०३ ॥
त्वमशोक शोकदहनैः समाकुलो ननु शोणशोचिरपुराणपल्लवैः ।
विरहो हरेरिह तु हेतुरस्य वा सहचारिणीचरणपातयातना ।३०४।

मयि दूयमानमनसि त्वमीदृशी
प्रियवर्त्म वर्त्मविदपि ब्रवीषि न ।

इति मञ्जुवञ्जुल तवाञ्जनाविलं
कुयशोऽभिशोभितमभूदलिच्छलि ॥ ३०५ ॥
सुमनो विनोदितमनो मनीषिभिः
सुमनास्त्वमेव सुमनोभिधीयसे ।
हरिवर्त्म वर्त्तय पुरोनुभूयते
सहसैव येन सरसीरुहेक्षणः ॥ ३०६ ॥

सुमनो यदि त्वमपि मौनमीहसे निरणापि नो दिनदुरीहितैव तत् ।
अनुभूयते हि सुमनाश्च दुर्मना खलु दुर्मनाश्च सुमना दिनक्रमात् ३०७
अचरत्स मे सहचरः क्व चातुरीमपि शंस तत्सहचरि प्रसीद नः ।
सहचारिणी हृदयवेदनां पुनः सहचारिणी जगति वेदनापरः ३०८
इयतासि कौसुमपरागरागिणी सहसैव कण्टकितदेहभागिनी ।
वद येन मे सहचरः पथाचरद्गतिचातुरीं रसिकराजशेखरः ॥३०९॥
तव दुःखभाक्त्वमिव रूपमीक्षते हरिविप्रयोगविधुरा त्वमप्यासि ।
इति चन्द्रमास्तुहिनतुन्दबिन्दुभिस्तव भाष्पसंभृतमभूद्दलेक्षणम् ३१०
सहकार कारय सहैव तेन मे समुदीक्षणः क्षणमविक्षतक्षणम् ।
तव मञ्जरी मधुरपिञ्जरीभवन्मुखमञ्जुरीति विजरीहरीति सः ३११
अतिसौरभ त्वमसि तस्य सौरभैरतिगौरवैर्विरहतोऽनिसौरभः ।
क्षतशोचने हि भवतो विलोचने कृतरोचने त्वयि विषादमोचने ३१२
वनमालमालक निभाल कैटभद्विषदङ्गसंगममृते दशोति ते ।
तव सौरभं ह्यगरुगाञ्जिगौरवं वपुरञ्जनप्रचयगञ्जनच्छवि ॥३१३॥
इह कोविदारकृतकोविदारता तव कोविदार न मनो विदारय ।
रसकोविदारपथमुत्सुको वद ममदावह प्रमदयाममोघताम् ॥३१४॥

पुन्नागस्त्वमसि तरो पुन्नागः सोऽपि नागरो जगति ।
उपदिश कां दिशमागान्मित्रमसिस्त्वं हि गतिवेदि ॥ ३१५ ॥
श्रीफल नाम तवेदं शमयति खेदं हठादेव ।
न हि कीर्तिर्गुणहीने जगदुपकारी स यो गुणीभवति ॥३१६॥
कुरुवक ? कुरु बकरिपुणा मिलनमकस्मात्सहास्माकम् ।
समुदश्चतु तव सुयशो मम च दृशोरुत्सवो बहुशः ॥ ३१७ ॥
केतक कलितनिकेतक आसीदाशीलितभ्रमणः ।
किमिह कुतूहलशाली वनमाली लीलया प्रियासहितः ॥३१८॥
मम केतक केतकीतिचेतः कलयामास तवात्रलोकनाथ ।
समुदेति मुदे हि ते प्रसूनं प्रियपीतांशुकपीतिमप्रकाशि ॥३१९॥
त्वयि केतकि तन्नखाङ्कुरेखा जयलेखा इव पुष्पसायकस्य ।
रचयन्ति तवेव हन्त गाढं वपुरुत्कटमुत्कचन्मनो मे ॥३२०॥
अयि नाग युगः स नागगत्या न किमत्यादरतस्त्वया निरैक्षि ।
समुदीक्षित एव स त्वया यत्सचमत्कारतयासि धूतमूर्धा ॥३२१॥
प्रियक प्रियकर्म मे कुरु प्रियवर्त्मैव पुरः प्रवर्त्तय ।
+++++++++++++++++++++++ ॥ ३२२ ॥
अधिरुह्य भवन्तमन्तकोऽजनि शीलादिकसम्पदा हरिः ।
भवदासवविह्वलो बलो विषमस्तेन समो हलिप्रियः ॥ ३२३ ॥
न च सद्मनि नापि चत्वरे स विहारी न पुरे न गोपुरे ।
रमते त्वयि संमते परं वितर त्वं प्रियक प्रियं मम ॥ ३२४ ॥
घटिताकृतिरस्ति दारुणा तव तस्यापि तरो स्वयंभुवा ।
युवयोरुचिता सह स्थितिर्विषमाशीविष एव दीप्यते ॥३२५॥

करकन्दुक एव पुष्पकेतो। कलिका ते गुलिकायसी ज्वलन्ती ।
कथमत्र पतेद्वियोगिपिण्डो यदि गण्डोच्चलकुण्डलो न रेमे ॥३२६॥
न लवङ्ग लवं गमिष्यतीदं प्रमदस्य प्रमदाजनस्य चेतः ।
दयितेन विनाङ्ग भृङ्गनादैः किमु गन्धैः किमु किञ्च गन्धवाहैः३२७
इदमालि तमालपल्लवानां मृदुतल्पं शुच एव कल्पते नः ।
दलितं वलितं विघट्टितान्तः कृतचित्रं कुसुमैश्च चन्दनैश्च॥३२८॥
गुणवत्यपि मालिकेऽपि साध्वी सुमनःशालितया समुज्झितासि ।
निरणायि मया दयाविहीने समता नाथ हरौ गुणा गुणानाम्।३२९।
निरणायि परे विदन्ति नो मम शोकस्तव कोकिगोचरः ।
अनुभूतिजुषो हि जानते परिमाणं परदुःखसम्पदः॥ ३३० ॥
प्रतिकुञ्जगृहं प्रतिद्रुमं च प्रतिवर्त्म प्रतिवल्लिमण्डलं च ।
प्रमदाभिरिवोन्मदाभिराभिः फलयन्तीभिरधावि दीर्घकालम्३३१
कलधौतलतेव धूसरा रजसेभानयितेव वल्लरी ।
धरणौ चपलेव निश्चला विलपन्तीभिरुदैक्षि राधिका ॥ ३३२ ॥
अथ चारुचमूरुलोचनामिदमूचुः कृतभूरिशोचनाः ।
तव चेयमुदेति दुर्गतिर्न खलु श्यामरुचौ व्यवस्थितिः ॥३३३॥
बहदस्रपयाः कृतानुतापं गणयन्ती मनसा च तं दुरापम् ।
निजगाद विषादविह्वला सहचर्याः सविधे मुहुः स्वचर्याम्।३३४।
शयितं सह तेन मुक्तदम्भं परिरम्भाननुभूतभिन्नभावम् ।
वदनाब्जनिवेशिताननाब्जं ग्रथितान्योन्यभुजोपधानबन्धम्।३३५।
इति वेद्मि न वेद्मि कामसौ कलयामास कलां कलानिधिः ।
अपि न क्षणमक्षिचेतसी जलदश्यामलिमा तु मुञ्चति ॥३३६॥

इदमंसतटे तदंशुकं सखि पीतं सहसैव पीतचेतः ।
प्रतिभूरिव भाति भूषणानामपि भूषाप्रतलाञ्छितानुरागः ॥३३७॥
सचित्रं स च मे सुमेचकं कलयामास तनौ कलामयः ।
न तदैक्षत नूनमेकता तनुशोभावसनाभयोरभूत् ॥ ३३८ ॥
हृदयं प्रविवेश निर्दयं सखि भित्वा भुजबन्धजं ततः ।
इयता हृदि वेदना स मे समकालं द्वयमप्युदञ्चति ॥ ३३९॥
दहदञ्जनमाक्षिणि क्षणादविशत्प्राग्बहिरीक्षितो मृषा ।
अपि चक्षुषि मुद्रणाजुषि प्रतिपन्नः कथमन्यथा स मे॥३४०।
इदमाक्षि दिदृक्षु घूर्णते स तु चक्षुःपथ एव लक्ष्यते ।
हृदि सोऽस्ति भुजस्तु वञ्चितो हरिनीतिर्वचसां न गोचरः॥३४१

इह मोहिकमधिकमालपन्ती राधा सा च बाधाकुलाभीराकिशोरीपरम्परा तदनुरागातिशयमनुवर्णयन्ती तन्मयतामेव तत्क्षणाद्भेजे । विदधे च विविधविचेष्टामिष्टामेतस्य पूतनाविघातनादिमनार्यमना एव । मुहुरपि मुखरीकृतमुरलीकतयातरलीचकार वनगहनमपि, हरिरवधाय राधादिकगोपसुधाकरमुखीनामसाधारणप्रेमबाधां स्वयमपि प्रेमौपाधिकमाधिमुपलभमानो वर्णयामास किमपि निगूढम् ।

व्याघूर्णयति समन्तात्पातयति महीतले विमोहयति ।
कारयति बहुविकारं जन्मस्थलमासवाद्गुरुप्रेम ॥ ३४२ ॥
चेतनां हरति पृच्छति बाधामन्तरिन्दुकिरणादपि दाहः ।
कण्ठकुण्ठगरलस्य पुरारेः प्रेम नाम विषमेतदसह्यम् ॥३४३॥
अथ कदापि राधात्मनि माधवाधियात्मानमव भूषयिष्यन्ती

केसरतरोः शाखामाकृष्य कुसुममवचेतुमुपचक्रमे नाम ।

उद्मूकूलमुदङ्घ्रिमूलमुदयद्वक्षोजमुर्वीतल-
व्यालम्बिप्रपदं नितम्बगरिमव्यानम्रगुल्फं मुहुः ।
कर्षन्त्याः कुसुमानि मुक्तकबरि स्विद्यन्मुखं प्रस्खल-
त्क्षौमान्तं श्लथबाहुवल्लरि मुहुर्दृष्ट्वा हरिस्ताम्यति ॥३४४॥

आकृष्यैककरेण केसरतरोः शाखाग्रमाचिन्वती
शिञ्जत्कङ्कणमन्यपाणिकमलेनोच्चैः प्रसूनं मुहुः ।
उद्भ्रान्तभ्रमरेष्वशोककुसुमभ्रान्त्या दशत्स्वङ्गुलीः
सीत्कारं शतधापि हन्त विदधे राधा स बाधां दधे॥३४५॥

कर्षन्त्याः कुसुमानि केसरतरोः शाखासमाकर्षणा-
त्साहाय्यस्य कृते स्मृतेक्षणपथे मुग्धास्मितं माधवे ।
दित्सन्तीमिव यान्तमन्तरुदयत्संभ्रान्ति सीमन्तिनी-
शश्वन्न्यस्यति मोघमङ्गुलिपुटं मुक्ताम्बरे मूर्धनि ॥ ३४६ ॥

राकाचन्द्रमसीव मीलितदृशि ग्रीष्मोग्रदावानल-
ज्वालाव्यग्रचकोरिका जलमुचीवार्तास्तृषा चातकीः ।
स्मेराम्भोज इवोपत्रासिमधुपश्रेण्यो रयाच्छ्रीपते-
रङ्गे चेलुरटद्भ्रुवो व्रजभुवो वामभ्रुवां दृष्टयः ॥ ३४७ ॥

चारुचन्द्रमिव चन्द्रिका निशि प्रावृषि प्रभुमपामिवापगाः ।
वारिवाहमिव चञ्चलाश्चलाः (१)प्रापिरे प्रियतमं व्रजप्रियाः ३४८

द्रष्टुमश्रुणि विरोधिनि क्रुधा विद्विषोश्च विनिमेषसंज्ञयोः ।

---

(१) "आप्लृ लम्भने" इति चौरादिकाद्धातोः 'स्वरितेदयमित्येके' इत्युक्तिबलादात्मनेपदम् ।

दृष्टिसृष्टिकरामिष्टमान्यतस्ता निनिन्दुररविन्दसम्भवम् ॥ ३४९ ॥

विरहबहलमन्युच्छिन्नहृद्ग्रन्थयोऽपि
व्रजनगरकिशोर्यो नाभवन्वक्तुमीशाः ।
मधुमथनदृगन्ताश्रान्तमन्दस्मितश्री-
परिहृतहृदयत्वाञ्जेजिरे चित्रभावम् ॥ ३५० ॥

दृग्बाणायसकोटयो व्रजकुलस्त्रीणां मनःकुञ्जरा-
लानानि क्रकचानि धैर्यधरणीजस्यापुरस्यान्तरम् ।
व्यापारानिलकालकालभुजगाः प्रेमाग्रदूत्योस्तनो-
स्तेजोऽग्नेः स्रुतयोऽतिसत्वरतया लक्ष्म्याः कटाक्षाः समम् ३५१

नानाकेलिकलाकलापमभितो+ +नुकूले तरोः
कूले नन्दसुतः कालिन्ददुहितुः कृत्वा स ताभिः समम् ।
तस्याः काञ्चनकान्तिगञ्जनरुचां श्रेणीभिरेणीदृशां
शम्पाभिः सह वारिधेरिव पयोवाहः पयोऽगाहत ॥३५२॥

अमुना यमुनापयोऽन्तरे विहरन्त्यः सह गोपसुभ्रुवः ।
परितः परिरेभिरेऽन्तरा लहरीरेव हरिभ्रमान्मुहुः ॥३५३॥

जलगूढवपुर्विकासि वक्त्रं विहरन्तीषु मुकुन्दसुन्दरीषु ।
विरराज कलिन्दनन्दिनी सा विकचाम्भोजवनीव यामिनीषु॥३५४॥

मुहुरम्बुजमाचुचुम्ब मुग्धः परिरेभे नलिनीमलीनुदस्य ।
अलयोऽपि मुखेषु गोपिकानां स्फुटपङ्केरुहशङ्कया निपेतुः ॥३५५॥

विचकर्ष करेण कोरकं कमलिन्याः पुलकालिसङ्कुलः ।
व्रजवामदृशः स्तनाशया जहसुस्ता निभृतं नतभ्रुवः ॥ ३५६ ॥

जलपञ्जलिनाञ्जनाभमास्येऽमितहास्ये सुदृशः स्वयं विकीर्य ।
उदडीनयदेष चञ्चरीकभ्रमशाली करपल्लवेन भूयः ॥३५७॥

हरिरूपनिरूपणैकताना कलयन्ती जगदेकनीलिमेव ।
स्थलमप्यवगाहते स्म काचिज्जलमोहाकुलचेतसा कृशाङ्गी॥३५८॥

हरिनिर्भरसङ्गसम्भ्रमोद्यत्पुलकग्रन्थिलकायकन्दलीका ।
अवगाह्य पयो वयोऽभिरामा व्रजवामाशु जडीबभूव काऽपि।३५९।
हरिणा हरिणायतेक्षणाभी रचितालङ्कृतिरर्कनन्दिनी सा ।
परिभूय बभौ नभोऽपि राजत्तरतारावलि पूर्णिमाहिमांशु ॥३६०॥
पशुपालविशाललोचनाभिः सरसाभिः पयसाभिऽषिच्यमानः ।
अपि तेन स तास्तथाभिषिञ्चन्करिणीभिर्विरराज दिक्करीव।३६१।
कलधौतलतानुकारिणीभिस्तनुभिर्गोपचमूरुलोचनानाम् ।
अनुभावितवैद्युतप्रभाभिर्यमुनैवाम्बुमुचो रुचो बभार ॥ ३६२ ॥
व्रजचारुचमूरुलोचनानां यमुनावारिणि मग्नविग्रहाणाम् ।
स तु चुम्बितुमास्यचन्द्रबिम्बं प्रतिबिम्बं शतधा चुचुम्ब चेन्दोः।३६३।
अवशं वपुरभ्युपेतबन्धा कवरी निर्गलितैव वैपरीतिः ।
अपि चोलमपव्यवस्थमासां जलकेलीषु रतान्तकान्तिरासीत्।३६४।
द्युतिमिच्छति चक्रवाकचक्रे स्तनचक्रेषु चमूरुलोचनाभिः ।
अभिजृम्भितसंभ्रमाभिरामं शतधाऽपि प्रिय एष पर्यरम्भि।३६५॥
उदयद्द्विजगण्डमण्डलीव स्फुरदुर्वीधरशृङ्गधोरणीव ।
कुचकोटिभिरुच्चकाश वीची विदलत्कञ्चुलिकासु तासु कृष्णा३६६
विरहं हरिणा सहाशु कुर्वन्स निजान्तःशुचिमुज्जिहीर्षुरिन्दुः ।
सुदृशां मुखचन्द्रचन्द्रिकाभिः परिभूतोऽभजदस्तभूधरान्तः ॥३६७॥
अपहाय जलावगाहलीलां परिधायांशुकमङ्गना हरिश्च ।
अवशा इव ते पुर समीयुः प्रतिभूकृत्य परस्परं मनांसि ॥३६८॥

इति रासोत्सवः ।

[ इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये

षष्ठोऽयमुल्लासः ॥ ६ ॥ ]



# अथ सप्तम उल्लासः

समान्तदक्षीणां विषयविमुखत्वात्परिजने
गृहान्तर्विश्रान्ते शिरसि दिनकान्ते विरमति ।
अशिञ्जन्मञ्जीरस्थगितमणिकाञ्चीकलकला,
वनान्तः श्रीकान्तं न हि पशुपकान्ताप कतिधा ॥ १ ॥

हंसानां कलहोऽङ्घ्रिहंसकरवं काञ्चीकलापध्वनिं
कुञ्जाटव्यभिसर्पिषट्पदघटाझङ्कारकोलाहलः ।
कुर्वाणे दिवसाभिसारमबलावृन्देऽरविन्दावली
वातोद्धूतपरागरागलहरी गोपायते विग्रहम् ॥ २ ॥

पानीयानयनच्छलं परिजने सञ्चापि पुष्पाहृते
नव्योद्यत्तरुवाटिकावकलनव्याजं समातन्वती ।
आसाद्य प्रियमिन्दुसुन्दरमुखी चिक्रीड गूढं वने
रागश्चेतसि चेद्गुरुश्चतुरता सिद्धेरसाध्यं किमु ॥ ३ ॥

सान्द्रीभूय विधुं विधूय मिहिरस्याच्छाद्य बिम्बं हठा-
द्धाराभिर्विदधद्गभीरतिमिरक्रोडावगूढं जगत् ।
गम्भीरध्वनिभिर्विधाय बधिरं धाराधरो देहिनं
व्यातेने रजनी दिनेषु सुदृशः स्वेच्छाभिसारोत्सवम् ॥४॥

मञ्जीरं मणिमेखलामपि दिवानाशो न वासो जहौ
विद्युन्मालिनि गर्जशालिनि पयोवाहे वियद्वाहिनी ।
श्रीराधाभिससार माधवमथ क्रीडन्तमेनं तदा
पश्यन्तोऽपि जना घनाघनमहो विद्युद्वृहं मेनिरे ॥ ५ ॥

अथ व्रजकुलकमलदलायताभिरामेक्षणाभिराभीरपुरन्दर

नन्दने सह विहरति विचरति च तारावलीभिरिव ताराधिनायके दिवसकरदुहितुरनतिदूर एव कुबेरानुचरो हरिसहचारिणीः सुधामेदव इव, धर्मसम्पदं कलिरिव समयमभीक्षमाणो जिहीर्षुरासीदसंख्यवनगूढः शंख(१)चूडश्चिरकालम् ।

कचिदपि समयेऽटवीषु बहुविटपिघटान्तरितस्फुटकुसुमपटुघटितवनवाटिकासु नानाकुसुममभिचिन्वानाः प्राणाधिकतया हरिगुणगणनैकतानाः काश्चन मधुमथन मुकुन्द माधव प्राणाधिनाथेति नादैरापूरयन्तीराशा दशापि कुसुमपरम्परा इवामोदैः समीरोऽहरद् हरीक्षितो दूरतया गुह्यकापसदो निगुह्यात्मानम् ।

आकर्ण्य ध्वनिमेणशावकदृशामाशासु धावन्हरि-
र्द्वित्रैरेव पदैर्गजं हरिरिव द्रागेव जग्राह तम् ।
मूर्द्धानं चरणाभिघातविधिना द्वेधा विधायाददन्मुक्तावच्च शिरोमणिं पुनरगात्ताभिः समं तद्गृहः ॥ ६ ॥

अथ कतिपयदिवसेष्वतीतेष्वतिशयबलपुष्टभूयिष्ठमदगरिष्ठो जगतामनिष्टोऽरिष्टो(२) नाम दानवो दण्डधर इव चण्डतरखण्डमूर्त्तिधरोऽखण्डसुरखण्डिताशेषमहीखण्डो मधुमथननिधनविधानानुसंधानघनो धूनयन्नवनिधरश्रेणीं धराधरकुहरगरीयोघोणदरीद्वारदुरीहमानझञ्झायमानपरम्पराभिराविरभूदभूतपूर्वानुभवप्रमादविभवः ।

उज्जाग्रद्रोमराजीत्रुटिततरुघटस्तुङ्गशृङ्गाग्रघात-

(१) शङ्खचूडवधकथा भा० १० स्क० ३४ अध्याये ।
(२) भा० १० स्कं० ३६ अध्याये कथा ।

व्यग्रोर्वीभृद्भिरुर्वीपतिशिरसि समुद्धाव्य दर्वीकराणाम् ।
श्वासोड्डीनाभ्रमभ्रंकषककुदगराद्दुर्गमस्वर्गमार्गो
नर्दद्ग्रीर्वाणगर्वद्विषदुरुवपुराभोगभाग्दिग्विभागः ॥ ७ ॥
न्यञ्चद्भूभारभुग्नीभवदुरगधवोद्भूतदर्वीकरार्वी-
गर्वीति त्रस्यदुष्णद्युतितुरगगणोत्तानचञ्चद्विषाणः ।
रोदःसंरोधिरौद्राकृतिरुदितककुद्व्यग्रगीर्वाणवर्गो
भूयिष्ठानिष्टनिष्ठस्त्रिभुवनभयभूराविरासीदरिष्टः ॥ ८ ॥
खुराग्रेणोग्रेण क्षितिमभिखनन्तं खरबल-
द्विषाणाग्रव्यग्रोच्छलितगिरिमुद्दालधितलम् ।
तमुत्तुङ्गं शृङ्गे पशुपशिशुरङ्गेन कलयन्-
धुनानोऽतिध्वानं मृगमिव मृगेन्द्रो हरिरहन् ॥ ९ ॥
अथायातः के(१)शी तुरगवरवेषी विरचयन्
खुरीखेलां वेलां भुवि चरणहेलाक्षेपवनः ।
श्रुती कृत्वोत्ताने नभसि विधुनाने हरिहया-
नघःकुर्वन्नुच्चैःश्रवसमलमुच्चैस्तरतया ॥ १० ॥
पुरः पश्चात् श्यावो(२) दृढनिबिडमध्योढलघिमा
महोत्तुङ्गः पृष्ठे शिरसि च गरिष्ठोऽसितरुचिः ।
गुरूदग्रग्रीवश्चरणवलयीव द्विनयनो
हयः केशी चित्रादपि जगति चित्राकृतिरभूत् ॥ ११ ॥
पुरस्ताद्विस्तारैः स्तन इव परस्तादपि पृथुः

(१) भा० १० स्कं० ३७ अध्याये कथा ।
(२) श्यावः कृष्णपीतः ।

सुपीनश्रोणीव प्रणय इव तुङ्गो मृगदृशः ।
तनीयोमध्यश्रीस्तनुरिव तरस्वी मन इवा-
निवारश्चेतोभूरिव दनुजवाहः समजनि ॥ १२ ॥

यदि चलति कदापि द्विपादिव, तदा पदा विलङ्घ्य रंहसा गिरिसंघमागरानपि सप्तपदीमिव सप्तद्वीपान्तरमपि तदिदमनन्ततलमपि निखिलमाशावलयमपि न गतिषु पारितोषमेत्य रोषवलित इव गन्तव्यस्थलविरहमनुभूय दूयमानमानसो भूयो भूयोऽपि तव धिगनन्ताभिधानमित्यनन्तामाधिक्षिपन्निव त्रिभुवनतनिमविधानमधुरीणां धातारमास्कन्दन्निव लिखति खरखुराग्रैरव्यग्रमुर्वीतलमेव बहुवेलम् ।

क्षणं खुरखरीखरः क्षणमनन्तवाहान्तर-
प्रपातहठलम्पटः क्षणमदभ्रझम्पोत्कटः ।
हयः क्षणमसौ हरिच्चरितचन्द्रचक्रभ्रमि
द्विपादिव महीतले क्षणमभूत्कृतावस्थितिः ॥ १३ ॥

सायमुपनगरीषु गतिचातुरिभिरभिभूय व्रजभूमिचारिणां मनो नयनानि बन्दीकृत्येव विहरन् , मधुरिपुमुपलभ्यारभ्यातिह्रेषारवमेषां बधिरतामुद्भावयन्नाशातलमाकाशवलयमापूरयन्नपि कृशयन्नपि जलधरजलधिगभीरघोषान् , रोषाकुलो निःशेषव्यात्तवदनतया भयानकः प्रकटितविटपकटुकठोरदंष्ट्राकुठारनिष्ठुरं द्रष्टुमना दुष्टदनुजहयपतिरुदधाव भूयिष्ठम् ।

हयास्ये हास्येन स्फुरति मधुरास्यो मधुरिपु-
र्भुजादण्डं दूराद्व्यतरदवलम्बं ददिव ।

द्विजैर्द्रागुड्डीनं चलितमचिराद् गोभिरभितः
स लेभे धामोच्चैः प्रभुरकृपया किं न कुरुते ॥ १४ ॥

अथ निपतति विगतासुतया हयवेषिणि कोशिनि दनुजपतावचिरोपस्थितविध्वंसमकंसलक्ष्मीरिव सपदि चकम्पे शम्पेव वसुधेयम् ।

यदवधि वसुधा दधार कम्पं तदवधिकं मतनुस्तनूढघर्मा ।
किमजनि कमलेव भोजभर्त्तुर्मधुरिपुमङ्गमरङ्गसात्त्विकश्रीः १५

अथ सपदि स विचार्य भूधर्ममात्यवर्यैः सह निजकार्यसिद्धये स नन्दनन्दननन्दानयनमाचार्य द्विरदकुलापीडकुवलयापीडचाणूरमुष्टिकप्रभृतिमहामल्लमोत्थापनमेव जीर्णाय समाहूयाक्रू (१) रमादिदेश किमपि निगूढमहाक्रूरः ।

नाशं बकीबकमुखेषु गतेषु तेषु
चाणूरमुष्टिकबलं स जयाय मेने ।
इन्दौ गतेऽस्तमवलेपि सरोजबन्धौ
खद्योतरोचिरिव घोरतमोजिगीषुः ॥ १६ ॥

अक्रूर व्रजनगरं व्रजा व्रजन्तु द्राक्पर्याकलितकरा व्रजव्रजास्ते ।
नन्दाद्याः सहकृतनन्दना परश्वः संभावी यदिह धनुर्महामहो नः १७

भोजभूपतिगिरं तु गान्दिनीनन्दनो द्रुतमधत्त मूर्धनि ।
प्रातरध्वनि चकार चंक्रमं संक्रमं रविरिवाघनिष्क्रमम् ॥१८॥

दक्षिणं प्रचलदक्षि गान्दिनीनन्दनेक्षणमधत्त तत्क्षणे ।
प्रैरयच्चरणमुग्रतो यदा तोयदाभपुरुषं स भावयन् ॥१९॥

(१) अक्रूरकथा भा० १० स्क० ३८-४१ अध्यायेषु वर्त्तते ।

आचुम्ब्य चक्षुरथ दिक्षुरसौ निधाय
सम्यग्विधाय शुभसूचकदर्शनानि ।
ध्यात्वा किमप्यभिदधत्पुलकप्रपञ्चैः
संचीयते स्म स चिराय मुदां चयेन ॥ २० ॥

निर्भिन्नाञ्जनपुञ्जगञ्जनरुचिर्भ्रूभङ्गदृग्भङ्गयो-
राचार्यैः कलितात्रिभङ्गललितो गोधूलिभिर्धूसरः ।
प्रस्थानक्षण एव दक्षिणमुहुर्यच्चक्षुरालम्बसे
लास्यारम्भणमित्थमेव स पुरोभावीति संभाव्यते ॥ २१ ॥

अञ्जनं विरचितानुरञ्जनं प्राप्स्यसि प्रथितखेदभञ्जनम् ।
अप्यताण्डवमितीव मन्महे मन्महे न तव हे विलोचनम् ॥२२॥

रङ्गा रचिततरङ्गाः सपदि कुरङ्गा वदन्ति हरिसङ्गान् ।
मयि राज्ञामियमाज्ञा कीदृशभाग्यादभून्न विज्ञातम् ॥ २३ ॥

बलपुलकवरैव मे जडिम्ना नयनपयोवहवेपथो प्रसीद ।
नयनपथगते व्रजाधिनाथे न तु भजतानुभवे विरोधिभावम्॥२४॥

क्वाहं मोहमयः क्व बोधिनिचयध्येयः स्वयं माधवो
भूयाल्लोचनगोचरोऽयमिति मे का नाम संभावना ।
कः प्रत्येतु विलोकते कमलिनीबन्धुं तमन्धं तमो
नह्यन्धः प्रभुरीक्षितुं क्वचिदभूद्रत्नं पुरोवर्त्यपि ॥ २५ ॥

द्रक्ष्यामि क्षितिषु क्षणं चरणयोर्लक्ष्माद्य लक्ष्मीपते-
र्दम्भोलिध्वजपङ्कजाङ्कुशपदाभिख्यापरिख्यापितम् ।
स्प्रक्ष्यामि प्रपतन्नुपेतपुलको वक्ष्यामि मूर्ध्ना रजः
स्रक्ष्यामि प्रमदं च द्रक्ष्यति यमी यं नो जनुःकोटिभिः॥२६॥

विश्राम्यद्गतिमुद्रितस्मृतिसमुत्तानश्रुतिप्रस्फुर-
ल्लोमाश्वाकृतिसाश्रुसन्ततिगवां धाराभिराराध्यते ।
सा वंशीकलमाधुरी मधुरिपोः स्यान्मे सुधाजित्वरी
कर्णद्वारचरी सुरासुरपतेराज्ञातिभाग्यादभूत् ॥ २७ ॥

उद्यद्वर्मघनाणुधोरणिदधद्धेनोश्च रेणोः कणा-
न्व्यालोलालकसंकुलालिकतयोन्तृष्णार्द्धगोरोचनम् ।
स्मेरापाङ्गवलत्तरङ्गनयनं यत्रेक्षणं प्रेक्ष्यते
वाष्पग्रन्थितपक्ष्म तन्मुखमहो स्यान्मे स कीदृक् क्षणः ॥२८॥

संसाराद्बहिरासते विदधते ध्यानैकतानं मनो
योगीन्द्राश्चरणं च गोचरयितुं नैव क्षमन्ते क्षणम् ।
रेदुः साहसमूढमानसपरीरम्भोऽपि सम्भाव्यते
किं ब्रूमो बत पङ्गुरिच्छति गिरीनुल्लङ्घितुं रंहसा ॥ २९ ॥

इदमादिकमाधिकमनुध्यायं ध्यायमनन्तरहितप्राण्हमध्यान्हप-राण्हसमयान्हिकमविदितक्षुधाबाधादिकमम्भोजिनीकुलबान्धवे चरमगिरिचूडाचक्ररत्नायमाने महायानेन यमुनातटानिकट एव वृन्दावनोपकण्ठमुपलेभे गान्दिनीनन्दनो नाम ।

ददृशेऽथ दृशेह मानया पदलक्ष्मैव विलक्षणं हरेः ।
अवतीर्य रथाद्वितीर्य दृग्जलपुष्पं समपूजि तेन तत् ॥३०॥

उरसा शिरसा च गान्दिनीतनयोऽवन्दत चेतसा दृशा ।
अवशो निपतन्नशोभतोत्पुलकौघैस्तरुरङ्कुरैरिव ॥ ३१ ॥

तदुदीक्षितुमाक्षि लोलुपं तदुपासङ्गकृतेऽङ्गमुत्सुकम् ।
उभयत्र सतास चेतसा प्रतिनद्योरिव मध्यगो द्रुमः ॥३२॥

दृशि वक्षसि मूर्ध्नि तत्पदान्तिकधूलीमयमाददे मुदा ।
न तदङ्कमशङ्कमानसोऽजनि संस्प्रष्टुमपि प्रभाववित् ॥३३॥
न विवेद निचोलमव्यवस्थं च्युतबन्धं चिकुरं च मुग्धचेताः ।
हरिमीक्षितुमुद्धताभिलाषः सहसोन्मत्तवदाप नन्दवासम् ॥३४॥

क्वचन मदकलाच्छवत्समण्डलैरुत्युच्चमुच्छलद्भिरुपचितपरमोत्साहपरिणाहम्, क्वचिदूधोभरमन्दसंचारुचटुलतरधेनुधोरणीकम्, क्वचिदविरलमदमत्तान्योन्यसमरापन्नातिचण्डषण्ड(१)मण्डलीकम्, क्वचिदुपचितपवमानदोधूयमानकरीषधूमसन्तानश्याम-लिमसमाहूतबर्हियूथम्, क्वचन च तरुणाभीरवीरदुह्यमानसुधासमानापरिमाणदुग्धमुग्धध्वनिसंदिह्यमानाहिमगिरितटवहमानगङ्गाप्रवाहम्, क्वचन च रचितातिचण्डचंक्रमणचमत्कारधेनुधारानुधावद्धीरेतरधूतकलधौतलगुडकराभीराकिशोरपरम्परम्, क्वचन कुचकलशविरोचमानव्रजवामलोचनाचारितचतुराननाद्यविदितचक्रपाणिचरणगुणानुवादसादरारम्भम्, क्वचन सुरकेसरिकैशोरावधिकर्मकौशलमकौशलापसारणमनुगीय क्रोडाधिरूढाप्रौढकिशोरान्निद्राविद्रावितद्रवणायासानकुर्वतीभिरशोभितमपि नीरन्ध्रपशुपकुलपुरन्ध्रीभिः, क्वचन पुरपयोधिनन्दिनीसीमन्तसीमशीलितामन्दसिन्दूरबिन्दुसन्दोहसन्देहघटनपटीयोदीपपटलीदीपनव्यग्रपाणिकमलभूयिष्ठसुचरित्रगोष्ठीकमनुबभूव गान्दिनीनन्दनो गोष्ठम् ।

व्रजाधिनाथमन्दिरे व्रजन्व्रजेन्द्रनन्दनं

(१) षण्डा वृषभाः ।

व्रजेन्द्रियाभिनन्दनव्रजानुकूलचन्दनम् ।
कटीतटीनटीभवद्धटीपटीतडिद्घनं
वपुर्विभाति भूतभाघनी भवद्घनाघनम् ॥ ३५ ॥
झणञ्झणद्ध्वनन्मणीमनोज्ञकिङ्किणीधरं
कलत्क्वणत्क्रमोल्लसत्पदानुरूपनूपुरम् ।
विलोलकुण्डलप्रभाप्रभातगोपगोपुरं
गजेन्द्रमन्दगामिनं महेन्द्रदर्पदामिनम् ॥ ३६ ॥
ललाटपट्टरोचमानपाटलाभरोचनं
दयावलोकलोपिताखिलो+हानशोचनम् ।
हिरण्यहारहारिभाविभासमानवक्षसं
भुजाग्रलग्नकङ्कणच्छटोद्धटोद्यदङ्गदम् ॥ ३७ ॥
स्फुरारविन्दगञ्जिना स्मितच्छटातिमञ्जुना
जगन्मनोनुरञ्जिना महातमोभिभञ्जिना
शुभंयुनाभिरोचमानमाननेन चक्षुषा ।
अभीरधेनुरेणुभिर्विधूसरीकृतालकं
समस्तलोकपालकं वयस्यगोपबालकम् ॥ ३८ ॥
सुपुष्पदामगुञ्जया विघूर्णितालिपुञ्जया
निगूढयापि चूडया त्रिगाढमूढसौभगम् ।
ददर्श दर्शतामसीतमःसमूहमूहयन्
महो वहन्तमान्तिके सहैव गान्दिनीसुतः ॥ ३९ ॥
दधानमभ्रमेचकं शितिप्रभाभिषेचकं
पटौ कटौ सुचेलकं कृतानुजानुमेलकम् ।

अयोमयोरुशृंखलामिवातिशुभ्रकुञ्जरं
मनोनिरोधपञ्जरं बलं च चन्द्रपाण्डरम् ॥ ४० ॥

प्रागाकर्णितविश्ववर्णितघनश्यामाभिरामे मनो
दृष्ट्वान्तं परिचीय जातजडिमा भूमावसौ निष्पतन् ।
बाहुभ्यां परिरभ्य निर्भरमुरोभागे समुत्थापितो
द्रागेव स्मितमञ्जुकञ्जनयनेनाहो तपःकौशलम् ॥ ४१ ॥

प्रौढप्रेमनमारूढजडिमा गान्दिनीसुतः।
प्रबभूव तनौ नैव भूयः किमभिधास्यति ॥ ४२ ॥

तालाङ्कोऽपि दधावङ्के मीलत्पङ्केरुहेक्षणम्।
आलिलिङ्ग कृतानन्दः श्रीनन्दो गान्दिनीसुतम् ॥ ४३ ॥

कृतोपवेशस्य सुवेशमत्या पत्या समं दत्तवरासनेषु ।
पानीयमानीय पदे सुधौते यशोदया दीप्तयशोदयापि॥४४॥

सुधामुचोवाच स चारु वाचा रुचा सदाचारपरः स्फुरन्तम् ।
दिष्ट्यासि दृष्टा महतोनुभूतिर्भवद्विना नैव तपोविभूतिम् ॥४५॥

विधाय सम्यग्व्यवसायमेनं स भोजयामास यथेष्टमिष्टम् ।
पप्रच्छ सोत्साहमभीप्सितानि हितानि तस्यागमकारणं च॥४६॥

स गान्दिनीसुनुरनूनशीलो नन्दं बभाषे ज्वलिताधिकीलः ।
आशीविषेणेव सहाधिवासी जनो न कः सीदति भोजभर्त्रा॥४७॥

धनुर्महो मे भविता परश्वो युक्तं करैः श्वो व्रजमानयस्व ।
सगोरसं नन्दसरामकृष्णमाज्ञापयामास स मां प्रतीति॥४८॥

आज्ञातं प्रथितधनुर्महेन राज्ञा
विज्ञातं भवतु भवाद्भिरित्यभिज्ञाः ।

गन्तव्योऽपसि मथुरां करान्गृहीत्वा
घोषेऽस्मिन्द्रुतमिति घोषयन्तु घोषान् ॥ ४९ ॥
बलेन प्रत्यूषे सह मधुपुरीं यास्यति हरि-
र्मनागित्थं घोषे श्रुतिकुहरकोशे गतवति।
बलायुःश्रीमोषा विहितमतिशोषा द्रुतमहो
न घोषे योषाणामहह कति दोषाः समभवन् ॥ ५० ॥
अथ कापि कला कलापिनी द्रागधृतिद्रावितचेतनासमुद्रा।
निहिते स्वयमप्युरोजभारे मणिहारे फणिसंभ्रमी बभूव॥५१॥
अपराधिविधूयमानधैर्या जलबुद्ध्याशु हुताशमाददे।
परिवेषयितुं गुरोर(१)मत्रे न परा वेद कराच्च्युतं च पात्रम्॥५२॥
पशुपालविशालपङ्कजाक्षी सपदि क्षीणकलेवरा परासीत्।
व्यपतन्नचिरात्कराद्धरायां मणिमुद्राङ्गदकङ्कणादयोऽपि॥५३॥
विषमेणविशेषनाभिपङ्कं व्रजपङ्केरुहलोचना शशङ्के।
अपराऽपि हिमांशुमंशुमन्तं पवनं प्राणवनीहुताशहेतिम्॥५४॥
भवनं च वनं च भिन्नमन्या न हि मेने मनसैणशावनेत्रा।
विगतेहतयापरापवित्रीकृतगात्रीव नितान्तचिन्तयासीत् ५५
अपरा कृतरन्धनानुबन्धा स्वयमन्धाभवदिन्धनं तदार्द्रम्।
अकरोदति रोदनाम्बुपूरैरपि निर्वाणमदभ्रवीतिहोत्रम् ॥५६॥
अपरापि गुरोः पुरो ददानेन्धनमार्द्रं दहनेषु रन्धनेषु।
अचिरेण मुमोच लोचनाम्भोलहरिं प्रेम न किं चरी करोति॥५७॥
दिनमुखमनुभूय गान्दिनीभूरथ व्यरचयदान्हिकमाशु पूर्वमह्नः ॥

(१) अमत्रं भाजनम।

अनुसरदुपनन्दनन्दमुख्यव्रजमचरत्सह नन्दनन्दनेन ॥ ५८ ॥

रथवरमधिरुह्य रेजतुस्तावसितसितौ वसुदेवपुण्यकेतू ।
मुरहरहलिनौ सहाधिरूढावुदयगिरीन्द्रमिवाभ्रशुभ्रभानू ॥५९॥

अनुचलदनुकूलगोपगोष्ठीचरणसमुद्धतधूलिधोरणीभिः ।
सपदि परिवृतो रथो मुरारेरहह मनोभिरिवैणलोचनानाम् ॥६०

यदि सह युवतीजनैर्यशोदा द्रुतमभविष्यदचेतना न मोहैः ।
कथमपि किमसौ तदा कदापि क्षणमपि शक्ष्यति केशवः प्रयातुम् ६१

अधिरुह्य सुतुङ्गसौधशृङ्गं दयितस्यन्दनसन्निविष्टदृष्टिः ।
हरिणायतलोचनासमूहो विदधे व्योमतरङ्गिणीसहस्रम् ॥६२॥

आवासाद्बहिरेत्य सत्वरमपव्रीडं दुकूलाञ्चल-
व्यालीढक्षितिमुक्तकुन्तलभरं पादाग्रबद्धस्थिति ।
प्राचीनाहितदेहवल्लि मुहुरुद्ग्रीवं यदेणीक्षणा-
पश्यत्तद्बुबुधे दुरुद्धरतया शल्याद्गरीयो हरिः ॥ ६३ ॥

हरिणापि निरीक्षि हारिणाक्षी हरिणाक्ष्यापि हरिः समं समैक्षि ।
उभयोरपि तत्तु मर्मभूमीरुहमूलोत्खननेन खनित्रमासीत् ॥ ६४ ॥

हरिवीक्षणलोभनिष्क्रियाक्षी द्रुतसंचारभिया रथस्य बाला ।
श्वसितं प्रतिरुध्य योगभाजामुपलेभे परितोऽचिरादवस्थाम् ॥६५॥

विगताशनमालुठत्कलापं रथधूलीः किमिदं न्विवीक्षमाणाः ।
व्रजधामदृशामदृष्टचेष्टाः समदुःखा इव बर्हिणो बभूवुः ॥ ६६ ॥

श्वसितानिलसानुकूलताभिर्मथुरामाप्स्यत माधवः क्षणेन ।
यदि न क्षितिरस्रुभिः सपङ्का प्रतिरोधानकरिष्यदाश्रमूषाम् ॥६७॥

अनुवीक्ष्य रथं रथाङ्गपाणेर्निपपात क्षितिषु क्षतासुकल्पः ।

द्रुतमेणकिशोरदृक्कलापो विललाप प्रललाप हन्त भूयः ॥६८॥

प्रस्पन्देऽपि दृशोरभूयत मनोऽयं द्रष्टुमिष्टं मुहु-
र्यस्यालिङ्गनमङ्गलाय्वमधुरत्रासेऽपि चासीद्व्यथा ।
अङ्गस्य व्यवधाविधायकतया यस्याङ्गरागेऽप्यभू-
द्द्वेषः सोऽयमुपैति हन्त मथुरां त्वं जीव धिग्जीवसि ॥ ६९ ॥

सूते स्यन्दनचण्डचंक्रमणतो दृष्टा मुधा दृष्टयो
दीयन्ते तमनुप्रयान्ति यदमी निःश्वासझञ्झानिलाः ।
प्राणानामधुना प्रयाणमुचितं तेनैव सार्द्धं न्वहि-
र्निर्व्रीडत्वमिदं तु हन्त पुनरप्यायान्ति यत्तं विना ॥ ७० ॥

द्रष्टुमिष्टतमदेशमग्रतो झम्पतः पतति केशवे क्षणम् ।
गाहते तमभिलङ्घ्य रंहसा तत्पुरैव परमास्पदं रथः ॥ ७१ ॥

अथ तपति ललाटपट्टमातपैर्भगवति मरीचिमालिनि कालनीतिविज्ञो विज्ञापयामास प्रज्ञावतामग्रणीः सूतः । भगवन्नयमम्भोजिनीकुलवल्लभो नभोमध्यमध्यास्य त्रिपद्गाहिनीपयस्यास्यादिप्रक्षालनेनाश्वानाश्वास्य विश्राममनुभवति माध्याह्निकाह्निकायैव । तदिह भवानपि समुचितमाह्निकमह्नाय निर्वाहयितुमर्हतीति । हरिरवधाय निधाय दिक्षु चक्षुरम्भोजमाहेन्द्रमहो सत्यं सत्यम् ।

छायाभिर्व्यधुरध्वनीननिवहायासाच्छिदां ये द्रुमा
मूलस्यापि निजस्य ते पुनरमी रक्षासु दक्षा न हि ॥
विश्वोत्तापहृदम्बुसम्भृतमभूत्सन्तापभारैरहो
कालः कोऽयमितीव निष्क्रियवपुर्मूको बको ध्यायति ॥७२॥

पातालान्तः समन्ताज्जिगमिषव इवारब्धकुल्यावगाहाः
सान्तर्दाहावहारा दलपुटपुटिताः पत्रिणो मुष्टचेष्टाः।
मार्गन्तो मार्ग एव प्रतिविटपितलं रंहसा मार्गसंघा-
श्छायामायासभाजो ययुरहह मुहुः फेनिलान्याननानि ॥७३॥

अथ गान्दिनीनन्दनः कालिन्दीपयसि निमज्ज्य, निखिलपरमानन्दसन्दोहकन्दं तस्मिन् गोविन्दं समाकलय्य किमिदमिति निमज्ज्य पर्याकुलयदेनमेव देवाधिदेवम्। अथ मनसि विचार्य कार्यं पुनरेतदेतस्यैवेति द्रुतमुपचितसंभ्रमचकितमनास्तमेव सनातनं प्रतितुष्टाव भूयोभूयिष्ठम्।

हे विश्वरूप सुरभूपनुताङ्घ्रिपद्म पद्मापते पतितपावन दानवारे।
हे कैटभद्विषदिभोद्धरणानिवारसंसारभारमपसारय ते नमोऽस्तु७४
हे पूतनादमन दारुणचक्रवातसम्पातनमथितशाकटभङ्गरंहः।
विद्विष्टदुष्टबकसेवकतुष्टरूपं कस्तावकं जगति वेद नमो नमस्ते ७५

हे दण्डिताघ दलिताघ पदावलम्ब-
घातप्रलम्ब हतमत्सरवत्स वीर।
हे चण्डकुण्डलिविखण्डन पुण्डरीक-
दीर्घेक्षण क्षपितदाव नमो नमस्ते ॥ ७६ ॥

दुर्दान्तिधेनुकविधूनन शुद्धबोध
गोवर्द्धनोद्धरण संक्षतशंखचूड।
मूढीकृताम्बुरुहसंभव देवचक्र-
चूडामणे निगमगूढ नमो नमस्ते ॥ ७७ ॥

हे केशिनाशन विनष्टगरिष्टदुष्टारिष्ट प्रहृष्टनरकिन्नरदेवसृष्टे।

शेषाङ्कतल्पपरिकल्पितसन्निवेश हे केशव अमितविश्व नमो नमस्ते ७८

हे केलिकल्पितनिरल्पितमीनरूप
संसारकूपगतमुद्धर मामरूप ?।
मुग्धो विधिस्त्वयि भवस्तव वेद नान्तं
भ्रान्तं मनो मम तु वेत्तु कथं नमस्ते ॥ ७९ ॥

मामच्छकच्छपकलेवर पाहि कच्छे
सौकार्यमस्तु भवने तव शूकराङ्ग ?।
अंहोनृसिंह हर वामन वा मनो मे
वामं विधेहि विबुधेश नमो नमस्ते ॥ ८० ॥

श्रीराम राम बलराम गुणाभिराम
त्वन्नाम संस्फुरतु चेतसि मे निकामम् ॥
बुद्धो मया भवतु बुद्ध मया न कल्कं
कल्किन्मनो भवति मेऽस्तु नमो नमस्ते ॥ ८१ ॥

इति स्तुत्वाक्रूरो जलनयनपूरोपलिपितः
प्रतस्थे प्रेमार्द्रः सहरिबलभद्रो मधुपुरीम्।
अनुस्मारं स्मारं चरितमनिवारं यदुपते-
र्न पन्थानं वेद स्खलदखिलवेदव्यतिकरः ॥ ८२ ॥

मथुरामनुभूय माधवोऽवददक्रूरमिदं पुरो व्रज।
सबलेन मयागमिष्यते सममाभीरगणेन सन्निधौ ॥ ८३ ॥

मधुसूदनसूक्तिमाददे स तु गङ्गामिव मूर्द्ध्नि शङ्करः।
पुरमाविशदाशु घोषयन् हरिरामागनं पदे पदे ॥ ८४ ॥

अथ तावतिकुञ्जराविव गत्याखिलचित्तहारिणौ।

मुखरीकृतमञ्जुनूपुरौ सुरराजौ पुरराजमीयतुः ॥ ८५ ॥

मथुरापुरि राजको रिपू रजको राजत एव नापरः ।
अत एव तमग्रतो गतं नपटादानहठादपातयत् ॥ ८६ ॥

सुमनोभिरुपेत्य तुष्टिमासीत्स तु मालाकृति दत्तसाधुदृष्टिः ।
अपि वैरिणमेव सेवमाने सुमनःशालिनि नानुकम्पते कः ॥८७॥

अध्वमध्यमितयोः पुरी तयोरीक्षणक्षणविधाविनां नृणाम् ।
देहयष्टिनिहितां मुखाम्बुजैस्तोरणं स्रजमिवासृजद्द्विधा ॥ ८८ ॥

एतयोर्नगरमध्यमेतयोर्वर्धमानघनतामसीमयोः ।
पौरमोदतटिनीतटद्वयीवाविरास जनधोरणी द्विधा ॥ ८९ ॥

तिरोभूतव्रीडा हतनिखिलपीडा विघटित-
प्रियारब्धक्रीडा गुरुजघनरीढोदयकरी ।
जयन्ती मान्थर्य्यं युवतिषु हरन्ती तदपरां
चिकीर्षामीर्ष्याभिर्मधुरिपुदिदृक्षैव ववृधे ॥ ९० ॥

युवानं व्यातेने स्थविरमपि पङ्गुं च विदधे
स रंहोजङ्घालं पटुनयनमप्यन्धमकरोत् ।
विदूरादाकृष्टीरकृतकुलपङ्केरुहदृशां
लघूचक्रे धैर्य्यं मधुमथनसन्दर्शनरसः ॥ ९१ ॥

मुरारिरेतीति यदास वाणी सा राजधानी प्रमदा तदानीम् ।
दिदृक्षुरक्षीणि मुखं मुरारेर्गवाक्षलक्षस्य मिषाद्व्यतानीत् ॥९२॥

मञ्जीरध्वनिमेखलाकलकलव्याप्तेन वामभ्रुवां
यान्तीनां निरवग्रहाद्यमुदभूत्साक्षाद्दिदृक्षावशात् ।
प्रस्वेदमकरप्रपातकपटाद्दिव्याष्टिश्च पौष्पीह वा-

न्मङ्गल्या मधुमर्दने मधुपुरीरथ्यामुरीकुर्वति ॥ ९३ ॥

अपि पतितमधः शिरोदुकूलं स्खलदपि कुन्तलदाम मुक्तबन्धम् ।
हरिवदनविधुं विलोकयन्ती च्युतमपि नीविगुणं न वेद मूढा॥९४॥

अमूं पश्यामि स्मितमधुरमस्याननविधुं
दिदृक्षुः प्रागेव प्रबलजनसंघट्टमभजत् ।
न गेहाद्देहल्याः पदमपि न या वेद जनुषा
जगाहे सा हेमद्युतिसुभगदेहा पुरपथम् ॥ ९५ ॥

स्वेदार्द्रा तनुवल्लरी नवनवोदञ्चत्तनूजाङ्कुरा
दृष्टिर्मुष्टतरङ्गसृष्टिरुदयत्प्रेमांशुधाराधुनी ।
नीवी विच्युतबन्धनैव कबरी शैथिल्यमाबिभ्रती
चेतः कोटिमनोजकुण्ठितमभूद्दृष्टे हरौ सुभ्रुवाम् ॥ ९६ ॥

मूढे गूहय मौलिमंशुकतटेनासौ प्रियः प्रेक्ष्यते
वामे वारय पाणिना ग्लपयति ज्योतीरवेराननम् ।
क्षीबे नीविगुणं पुनर्नियमय क्षौमाञ्चलं न्यञ्चति
श्रोण्यास्तं शतधेत्यभाण्यपि सखी श्रोण्या न धन्याशृणोत्९७

मधुरिपुमधुरिमलहरीतरलीकृतचेतसो नार्यः ।
अलसाबशत्वजृम्भामोदायितमूर्त्तयो न किं प्रोचुः ॥ ९८ ॥

एतावत्कालमासीदपि नयनजुषामन्धता++++
मेनेषां स्रष्टुरस्मिन्नहह मधुपुरे निष्फला दृष्टिसृष्टिः ।
एतासां सोपवासावलिरपि सुदृशां दृक्चकोर्याः सुधांशोः
सौन्दर्याना प्रतार्या निरधिगतसुखा नान्वभूत्सा व्यमुञ्चत्॥९९॥

युक्तं युक्तमहो विमुक्तमखिलं श्रेणीभिरेणीदृशा-

मेतस्मै कुलशीलकौशलमसीमानन्दवृन्दावने ।
आस्मिल्लोचनगोचरे त्रिजगतीसौन्दर्यशोभाकरे
कुर्वीत प्रमदा वदानुशरणं का धैर्यमर्यादयोः ॥ १०० ॥

अथ गण्डमण्डलविलोलकुण्डलं
कृतसिंहखेलगतिरिङ्गतः पथि ।
क्षितिपस्य वेश्मगमनानुषज्जया
सह कुब्जयाजनि हरेः समीक्षणम् ॥ १०१ ॥

हरिराह चन्द्रमुखि देहि चन्दनं
सह मालयैव हृदयाभिनन्दनम् ।
कुसुमानि भामिनि समानि तारया
वद कस्य वेश्मनि विशेषमेष्यसि ॥ १०२ ॥

सोवाच स्मितसुधयाभिषिच्य वाचं
काचं मे निधिरमिलद्गवेषयन्त्याः ।
यस्येदं मम हि करोतु किं स कंसः ।
सर्वं ते नयतु भवान्भवावतंसः ॥ १०३ ॥

आसज्यत्तनुमतनोरिवोग्रमौर्वी
ग्रीवायामुदधिसुतोपलालिताङ्घ्रेः ।
सा नाम द्रुतमनुरागबद्धरामा
श्यामाङ्गे व्यतनुत कुङ्कुमानुरागम् ॥ १०४ ॥

पदाग्रं कुब्जायाः स मृदुचरणाब्जाभिमृदितं
प्रकुर्वाणो गुल्फास्तदनु समुदस्यापि चिबुकम् ॥
ऋजूचक्रे चक्री वपुरधिकवक्रीकृतमपि

त्रिलोकीसौन्दर्यालयपदचिरादेव तदभूत् ॥ १०५ ॥
निशाविलासाय विलासनेत्रया निमन्त्रितः स्मेरदृगञ्चलेन सः ।
चचाल भूपालधनुर्दिदृक्षया विपक्षपक्षक्षयमुख्यदीक्षया ॥१०६॥
विवेश कोदण्डगृहं प्रचण्डवेतण्डशुण्डायितबाहुदण्डः ।
समुल्लसत्कुण्डलमण्डितगण्डो बभौ स हेलोद्धतचापदण्डः ॥१०७॥
स चारुचामीकरपीतवासा रराज चक्री कृतचित्रतापः ।
सौदामनीदाम दधद्दधानः सुत्रामकोदण्डमिवाम्बुवाहः ॥१०८॥
हठाद्धठारब्धगभीरहुङ्कृतिः कठोरटङ्कारविमूढदिक्पतिः ।
धनुर्द्विखण्डीकृतवान्स लीलया मृदुं मृणालीमिव मत्तदिग्गजः १०९
कूर्मो निर्धूतमर्मा मुकुलितनयनः कुण्ठयामास कण्ठं
प्रोन्मीलद्दृक्सहस्रद्वयमुरगपतिः सावधानीबभूव ।
दम्भोलिर्जम्भभेत्तुर्द्रुतमपतदधः पाणितः शम्भुरामी-
द्गौर्या गाढावगूढो विदलयति हरौ चण्डकोदण्डदण्डौ ॥११०॥
दृक्कोणो नैव शोणः समजनि न मनाग्भ्रूपुटे कोपि भङ्गो
नैवास्यं वीतहास्यं क्षणमलिकतटे भ्रूकुटेर्न प्रसङ्गः ।
टाङ्कारो जाग्रदुग्रप्रभृतिदिगधिपारब्धकिङ्किनिनादं
विश्राम्यत्कंसवादं धनुरसुररिपुर्द्राग्द्विखण्डीचकार ॥१११॥
आस्यं पश्यति दर्पणे विरचयत्याकल्पमल्पेतरं
तल्पं कल्पयति प्रसूनसुभगं निर्माति नम्रस्रजः ।
धूपैर्धूपयति प्रदीपयति सा रत्नप्रदीपैर्गृहं
वारम्वारमुपैति मन्दिरबहिः पन्थानमुद्वीक्षते ॥ ११२ ॥
द्विखण्डीकृत्य कोदण्डं पुण्डरीकनिभेक्षणः ।

निशायां मण्डयामास कुब्जायाः केलिमण्डपम् ॥११३॥

अथ सुखसमतीतयामवतीको जगतीभारमपानिनीषुरीश्वरो द्वारि द्विरदवरवारितायां भोजभूपतेरवततार सह सीरिणा मुरवैरी। अपश्यदपि दुष्टाम्बष्ठाधिष्ठितनिष्ठुराचारनिष्ठितधरणिधरगरिष्ठमतिभूयिष्ठमदद्रष्टिपङ्क्तीभूतभूपृष्ठमाघ्राय दिग्गजगणगन्धमन्धीभूय समुद्ग्रीवीभवन्तमिव, प्रथयन्तमिव पूर्वपरकायत्वमुच्चमाधमाङ्गत्वम्, क्रमसमुन्नतनतसुवृत्तपूर्वापरभागपरिणामं प्रकटितजयसिन्धुनन्दिनीश्यामलरोमराजिस्फुरदुरोजशान्तकुम्भकुम्भद्वयमिव, समुदितनीलीनीलिमशालिशुण्डादण्डमण्डितमपि विजृम्भमाणसिन्दूरपूरपूरशोणिमपरिपुष्टकुम्भकूटं कूटमिव मूर्त्तिमन्तमिव गम्भीरमम्भोधरधरमिव विविधविचेष्टारम्भं कुम्भीन्द्रं नाम कुव(१)लयापीडम्।

यः खलूद्दण्डशुण्डादण्डतयोद्यदण्डदण्डधर इव चण्डिमानमावहति बहुवेलम्।

यमतिपरिलम्बमानगुरुपरिमाणलाङ्गूललाङ्गूलतया जगत्प्राणपानप्रवर्तमानकुम्भीनसारम्भसम्भारभीमभूमिधरमिवानुभवति त्रिभुवनमेव।

येन च कचकाचमेचकाकारतया त्रिभुवनभयभवनचतुःस्तम्भायमानचतुरचरणतया चतुष्पादं धर्ममभिभूय स्वयमेव चतुष्पादीभवताऽधर्मेणेवाभिभूयते भूरभितः।

यस्मै च परमदुर्जयतया दूरादेव देवा अपि, समरधुरन्धरा

(१) कुवलयापीडवधकथा भा, १० स्कं० ४३ अध्याये।

गन्धसिन्धुरा अपि, नरवीराः अपि, नमस्कुर्वते सभयाः ।

यस्माच्च चरममहीधरादिवास्तमीयुषो हिमरोचिषो विवरद्वयमार्गतो द्विधा भूय निर्गतौ मयूखपुञ्जाविव कुञ्जावुल्लसतः । यस्य तुङ्गिमानमनुभूय भूमिधरणव्याजादामज्जुरध एव भूमेर्बलभूमशालिनोऽपि दिग्गजाः सर्वे ।

यस्मिंश्च श्यामधामनि व्योमनीवासीनः ।
सकलमनुभवति लघुतरमेव धरणिधरकुलं धीरः॥११४॥

पर्जन्यावार्यगर्जैः प्रकटकटतटीदानधाराभिरञ्च-
द्दन्तक्रौञ्चप्रपञ्चैः कनकजरसनादामसौदामनीभिः ।
शुण्डालाङ्गूलदण्डालघुतरचरणस्तंभगम्भीरमेघ-
श्रेणीभिर्द्वारि देवो घनसमयमिवापश्यदुच्चैर्द्विपेन्द्रम् ॥११५॥

ध्वनन्मञ्जुमञ्जीरझङ्कारधारा -
क्वणत्किङ्किणीदामकोलाहलेन ।
प्रतीभभ्रमोज्जाग्रदुग्रक्रुधान्धो
हरिं धावति स्मातिरंहाः स कुम्भी ॥ ११६ ॥

रणारम्भसंरम्भदम्भी स कुम्भी
भृशं भीमरंहोभिरन्ध्रेण लङ्घि(१) ।
हठादेव दैत्यद्विषात्युद्भटानां
रुषा पश्यतामुत्कटौजोभुजानाम् ॥ ११७ ॥

क्षणं दन्तकोटौ नटत्कैटभारिः
क्षणं कुम्भकूटे रटत्केसरीव ।

---

( १ ) "लङ्घि" इत्यत्राडभावश्चिन्त्यः ।

चतुर्णां पदानां क्षणं मध्यभागी
नरो नेति गीतो न कैष्कैरभीतः ॥ ११८ ॥

अदभ्रं नतोर्वीभरव्याग्रदर्वीकराधीशकुण्ठीभवत्कूर्मकण्ठम् ।
वलद्भूधरालीकरालीकृताशं द्वयोराविरासीन्महायुद्धमिद्धम् ११९

क्षणं शुण्डादण्डं क्षणमपि सलाङ्गूललतिकां
दधानः पक्षीन्द्रः फणिनमिव चिक्षेप रभसात् ।
उदञ्चच्चीत्कारं करिवरमवारं स्वयमपि
क्षणं सेहे दन्ताहतिमपि दुरन्तां करिपतेः ॥ १२० ॥

फूत्कारोड्डीनभूमीरुहनिकटगिरिग्रामभङ्ग्रिमपात–
न्यञ्चच्चञ्चन्महीकं प्रलयवनमिवारब्धगम्भीरघोषम् ।
उद्यलाङ्गूलतुङ्गध्वजमहह गजः क्रूरदन्ताभिघातं
धावं धावं व्यधत्तोरसि हसितमुखो हेलयैवाग्रहीत्सः ॥ १२१ ॥

हेलाखेलावलीढान्तरमसुररिपुर्दन्तिदन्ताग्रशुण्डा·
संस्पृष्टस्पृष्टपृष्ठो व्यथित इव पतन्नुत्पतन्नुद्दधाव ।
प्राप्तं मत्वा प्रमत्तद्विपपतिरवनीभेदमीदृग्विधत्ते
दंष्ट्राग्रेणोग्रनादं विकलमहिकुलं यद्धिया बंभ्रमीति ॥१२२॥

उत्पाट्यैककरेण दन्तवलभीं पङ्कान्मृणालीमिव
स्वीचक्रे क्षितिचक्रभर्त्तुरिव तां चक्री यशः कन्दलीम् ।
+++++++++++++++++++
+++++++++++++++++++ ॥१२३॥

निपपात नृपद्वारि निर्दन्तो दन्तियूथपः
कंसस्य कीर्त्तिभूमेव लूनपक्ष इवाचलः ॥ १२४ ॥

तद्दन्तावलदन्तकन्दलभरस्कन्धोद्धुरः श्रीधरो
विश्वोद्धारधुरन्धराकृतिभृतः क्रोडस्य दध्रे श्रियम् ।
नव्योद्यद्द्वि++मथातुलहरीव्यक्तीभवद्रक्तिम-
प्राचीपर्वतगर्वमाहरदसृग्भारारुणस्त्रग्भरः ॥ १२५ ॥

ऊढसिन्धुरधुरन्धरदन्तप्रौढकन्धरमगाहत रङ्गम् ।
सोऽथ सिन्धुमिव मल्लसुवेषो बाहुसन्निहितभीपणशेषः॥१२६।

पातालादिव दिक्तलादिव नभोदेशादिवाभ्यागता-
वुत्पन्नाविह पन्नगादिव दिशामीशादिवार्कादिव ।
कावेतावतिलोकदेवभुजगाशाधीशलक्ष्मीभरा-
वित्यन्तः परिचिन्तितौ परिषदां चक्रैश्चमच्चक्रतुः॥ १२७॥

देवक्यानकदुन्दुभीयहृदयस्नेहं हठाद्वर्द्धयन्-
कामं कन्दलयन्स्त्रियां यमिधियामन्तः परं शीलयन् ।
मल्लांश्च ज्वरयन्नरांश्च तिरयन् द्राक्कंसमुत्प्राणय-
न्कुर्वन्विश्वचमत्कृतिं यदुपतिर्युद्धस्थलं गाहते ॥ १२८ ॥

अथ निखिलमनोहरावतंसं दिशि दिशि जनितजनप्रशंसं
दृशं निधाय तमवधायातिनृशंसोऽपि कंसोऽभिशंसति स्म मनसि
निगूढमधिरूढचमत्कारसंभारः ।

ग्रस्तेव ग्रथितेव हन्त लिखितेवास्मिन्निखातेव च
स्यूतेवापि च विस्मृतेव च समाकृष्टेव मुष्टेव च ।
निर्मग्नेव निरुद्धेव जगतीदृष्टिर्दरीदृश्यते
दम्भस्तम्भमुपैति सम्प्रति स मे कोऽयं तमालद्युतिः॥१२९॥

अथ (१)मल्लानवधाय क्रुधाभिधावतोऽविधूतचेतसामतिसाधीयसामुदञ्चति स्म निभृतमेव प्रतिमञ्चमयं च वाक्प्रपञ्चः ।

अर्वाचीनतमालकोमलतनुः क्वायं क्व मल्ला गुरु-
ग्रावग्रन्थिकठोरविग्रहजुषो घोरस्फुटन्मुष्टयः ।
वज्रं क्व क्व नु मञ्जरीसुमनसामाः कंस कोऽयं क्रम-
स्तैरेतस्य समं नियुद्धविषमं यद्युद्धमाबध्यते ॥ १३० ॥

वल्गास्फोटस्फुटितककुभो झम्पतः कम्पितक्ष्मा
मूर्द्धाघातत्रुटितगिरयो वज्रनिर्घोषघोराः ।
चाणूराद्याः पृथुनरभुजस्तम्भकुम्भीन्द्रशुण्डा-
श्चण्डास्फालान्बहु विदधिरे बद्धयु(२)ल्लासमल्लाः॥१३१॥

कृत्वाग्रे वाममुष्टिं फलकमिव करे दक्षिणं तीक्ष्णमुष्टिं
बद्ध्वा निश्चन्द्रहासावपि कलितमहाचन्द्रहासाविवोग्रौ ।
चाणूरः कैटभारिः समरभुवि हली मुष्टितो बद्धरुष्टि-
र्युद्धाविष्टौ दिशोऽष्टौ तलबहलरवैर्ध्मापयन्तावभूताम् ॥१३२॥

मूर्ध्ना मूर्द्धानमिद्धध्वनिपरुषमुरश्चौरसोर्वापि चोरु
जङ्घाकाण्डेन जङ्घां पदमपि च पदा बाहुना बाहुदण्डम् ।
पार्श्वं पार्श्वेन शश्वत्तलमपि तलतो मुष्टिना मुष्टमुच्चैः
पृष्ठं पृष्ठेन पिष्टोरगरमणफलं निघ्नतोर्युद्धमासीत् ॥ १३३ ॥

आलक्ष्यालक्ष्य साक्षादवसरमभितो घूर्णतां तूर्णवारं
पूर्णामर्षप्रमर्षप्रचलितमनसां रङ्गमध्यस्थलीषु ।

---

(१) मल्लनियुद्धवर्णनं भा० १० स्कं ४४ अध्याये ।

(२) युधो लासाः ।

मुष्टिप्रक्षेपतुल्यक्षणजनितघनस्फारफूत्कारवारे(१)
वीराणां बाहुदण्डा दधुरधिकसमाबद्धयुद्धा हि भावम्।१३४।
गजाविव जिगीषिणौ घटितलोहदण्डाविव
द्रुमाविव जतुक्रमाकलितगाढसम्वेष्टनौ ।
मिथो भुजभुजङ्गमावलितबन्धमन्धौ रुषा
कृतोरुपदयन्त्रणौ भुवमुभावलंचक्रतुः ॥ १३५ ॥
अन्योन्यमुष्टिपरिपिष्टशरीरयष्टिप्रव्यक्तरक्तचययुक्ततया युवानः ।
उद्गाढगैरिकनगा इव शोणबिन्दुसन्दोहसुन्दरगजा इव ते विरेजुः१३६
चाणूरः क्षणमुपरि क्षणं मुरारिस्तालाङ्कः क्षणमपि मुष्टिकः क्षणं सः ।
भूपृष्ठे कति न वितेनिरे विगाढव्याघृष्टीरहह जिगीषया युवानः१३७
चाणूरे चूर्णितोरौ विदधति मुखतो मुष्टिके रक्तवृष्टिं
पिष्टप्रत्यस्थिकूटे पतति भुवि शले तोशले तौ पलेशः ।
रङ्गन्तौ रङ्गधूलीधवलितवपुषौ वीक्ष्य लीलावतंसः
कंसः प्रोवाच कांश्चिन्नयत बहिरिमौ शान्तमद्यास्तु युद्धम्१३८
इत्थं दुर्नयदुर्निवारमचिरादाकर्ण्य दुर्वर्णितं
धावित्वाऽभिपतन्तमन्तकमिवालक्ष्यैतमक्षोभणः ।
भोजक्ष्मा(२)पतिरग्रहीदसिमसीमाभालिरभ्रंलिहन्-
रुद्रः क्रुद्ध इव त्रिशूलमखिलप्रक्षोभणप्रेक्षणः ॥ १३९ ॥
निर्मोकादिव भीमभोगिनमुपाकृष्याशु कोशादसिं
कल्पान्तभ्रमदर्ककर्कशमहो दुःप्रेक्ष्य दुःप्रेक्षणः ।
जग्राह ग्रहराजराजदमितव्योमेव वामे करे

---

(१) प्रवेकः प्रवरः । (२) वारः समूहः ।

मध्योन्नद्धमणिप्रवेक(१)फलकं भोजाधिराजः क्रुधा ॥१४०॥

भूभृद्वंशवतंसकंसनृपतेर्दुर्वारदोर्दण्डयो-
श्चर्मासी दधतुः प्रचाण्डिमचमत्कारं समुद्दण्डयोः ।
एकः कुण्डलितः परोऽतिविततः श्रोणीभृतः शृङ्गयो-
राविर्भूय भुजङ्गमाविव जगत्प्राणाशिनौ भीषणौ ॥१४१॥

असिं करालं फलकं विशालं समुद्बभार द्वयमेककालम्
विवर्तयिष्यन्निव विश्वचक्रं चक्रीश(२)कूर्माधिपती क्रुद्धान्धः ।१४२।

पृथुफलकमतीव संबभासे दधदपि भीषणभासचन्द्रहासम् ।
समुदयशिखरीव भूपसिंहः समसमयोदितसैंहिकेयकेतुः ॥१४३॥

चञ्चच्चर्मासिदण्डो भ्रुकुटिकटिपरिभ्राम्यदाशो नतभ्रू-
र्भेजे भोजाधिराजस्त्रिभुवनमभितः कम्पयञ्झम्पगर्जैः ।
उद्भूतानल्पकल्पाम्बुधिरिव विवृतावर्त्तनृत्यत्तरंगो
दुर्वारौर्वाग्निपिङ्गोच्छलदलघुरुचिर्वेगगम्भीरघोषैः ॥१४४॥

अभणदपि दुर्भाणभावितमदो मदकल इव गम्भीरनादप्रति-
नादिताशेषयादःपतिर्यदुपतिमहह भोजाधिपतिर्भूयः ।
त्रस्यद्दिक्पालपालीविहिताहितनुतिः सर्वभूसार्वभौमः
स्तम्भीकुम्भीन्द्रकुम्भस्थलदलननगोद्भेददुर्वारधारः ।
सोल्लासं चन्द्रहासः पशुपशुतरणारम्भदम्भाद्भवन्तं
दृष्ट्वा धावन्तमुच्चैरुपहसति लसद्धीरकार्चिर्मिषेण ॥१४५॥

द्राग्दूरादेव दावद्रुतदलिततया विद्विषां देहदृप्य-

---

( १ ) कंसवधवर्णनकथा भा० १० स्क० ४४ अध्याये ।

( २ ) चक्रीशः सर्पराजः ।

द्रक्तासारान्ममासौ भुजभृतरभसो नापिबच्चन्द्रहासः ।
इत्थं दीर्घोपवासव्रतजनितमहाजाठराग्नेरसह्या-
देह्यह्याभीर मा भैस्तव रुधिरसुधापारणामारभेत ॥१४६॥
सौन्दर्याद्दण्डपाणेरियमसिलतिका मज्जतोऽस्यामलज्जाः
स्वर्या मज्जन्ति नार्यः स्फुरदुरसि परिष्वज्य रम्भादयोऽपि ।
तत्त्वं धन्योऽसि यत्ते व्रजकुलजनुषो नन्दनोद्यानवाप्या-
माभीरीदृक्चकोरीचुलकितमनसोऽप्यद्य भावी स मोदः १४७
चण्डमानपवमानरंहसा शैलशृङ्गमिव तुङ्गमम्बुदः ।
आससाद सहसा नृकेसरी राजसौधमखिलैरलक्षितः॥१४८॥
वातोद्भ्रान्तदुरन्ततोयदतडिच्चक्रायमाणाश्चिरं
चर्मासी रचयन्नसीम परितो बभ्राम चित्रं कृती ।
किं कुर्वीत जगन्ति हन्त हरिणा पूर्णानि पश्यन्निजा-
मात्र्योघान्निजपानमत्त इव स क्रोशावशस्तद्भ्रमात्॥१४९॥
तूर्णं तस्य विघूर्णतोऽसिलतया सार्धं समं चर्मणा
लेभे नावसरं प्रतीक्ष्य सुचिरं व्याहन्तुमेकक्षणम् ।
मोघीकृत्य सहस्रधापि वसुधाधीशस्य भीमायुधं
निःसीमास्य युधा क्रुधाप्यतिमुदं चक्रे स चक्रायुधः॥१५०॥
हस्ताम्भोजलताभिघातनिपतत्कोटीरमुद्धाटयन्—
शौटीरं नृपतेः करेण कलयन्कालाहिचक्रं तलम् ।
तं लाङ्गूलनिरुद्धभोगिनमिवाचर्योच्छ्वसन्तं हरि-
र्भूयः कालियकेलिकौशलमुरीकुर्वान्निवाशोभत ॥१५१॥
पृथ्व्यां निपात्य तमुपेतमदं तदङ्के

विश्वम्भरो भरमधत्त तदा पदा सः।
चातुर्यमाचरदतीव तदा तदात्मा
यत्नात्तदन्तरमगाहत जेतुकामः ॥ १५२ ॥
उपेन्द्रो भूपीन्द्रं करदलितमूर्धानमजहाद्—
यथेन्द्रो पारीन्द्रं दिगुपचितमुक्तामलयशाः।
स तं नैवामुञ्चत्कथमपि जिगीषुः प्रकटित–
प्रतापा + ज्योतिर्मयमहह रूपं विरचयन् ॥ १५३ ॥
लघूकृत्वा भारं शिरसि तमवारं फणिपते–
र्वतंसे भूपानां समरभुवि कंसे निपतति ॥
दिविष्ठा भूमिष्ठा जपरसितनिष्ठा मुमुदिरे
किरन्तो भूयिष्ठं कुसुममुपरिष्टान्मुराभिदः ॥१५४॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये
सप्तमोऽयमुल्लासः ॥ ७ ॥



# अथाष्टम उल्लासः ।

अथ विघटय्यासह्यशौटीर्यपर्यन्त्यधिकरणमपर्याप्त्यदौर्जन्यावार्य्यमौखर्य्यमसौकर्य्यैकनिकाय्यमपगतमर्य्यादमसत्कार्यवाटीपरिपाटीपटीयांसं धरणितरोऽसकं परिलसदुग्रसेन तमुग्रसेनं च धरणिधवाधिपत्ये निर्वर्त्य व्यपगतदुर्दान्तामित्रयोः पित्रोश्च निगडबन्धयन्त्रणामवमोच्याशोच्यान्नरगात्मानं जगदात्मापि जगदीश्वरो मेने ।

त्रिजगदुपरि वर्त्तमानोऽपि दण्डायमानो निपतति स्म देवाधिदेवोऽपि वसुदेवदेवकीपादपल्लवेषु वल्लभः कमलायाः । भृशमिदमवदच्च तच्चरणयोः प्रसारितपाणिपल्लवो वल्लवोपकण्ठ वैकुण्ठकण्ठीरवोऽप्यकुण्ठमायामोदितमानुषारम्भसम्भारः ।

षड्बालाः कुलपांशुलेन निहताः कंसेन पापीयसा-
मुत्तंसेन कृते ममैव निगडैर्गाढं युवां पीडितौ ।
वक्तव्यं पितरौ न किंचिदितरौचित्यं च चित्ते ययौ
यत्क्षन्तव्यमिति (१)ब्रवीतुमहह व्रीडेऽहमीडे कथम् ॥१॥

जातः शैशववैभवेन सुखयत्येवात्मजन्मा स्फुट-
व्याहारस्मितजानुपाणिगमनक्रीडादिनादौ मनः ।
पित्रोः प्राप्तवयाः प्रयाति परमालम्बत्वमुज्जृम्भय-
न्नैश्चिन्त्यं सुजनुः परन्तु कुजनुः खेदाय मादृग्विधः ॥ २ ॥

पश्यन्तावपि तानि तानि चरितान्यन्तर्बलाद्विस्मयं

---

(१) ब्रवीतुमिति प्रयोगाश्चिन्त्यः ।

जानन्तावपि नैष मानुष इति ब्रह्मैव साक्षादिति ।
देवक्यानकदुन्दुभी सुत इति स्नेहादुव्यधत्तां हरे-
राश्लेषं विदुषोऽपि किं किमहो स्नेहैर्न विस्मार्यते ॥३॥

अथ हरिरखिलानुरञ्जनानि कुर्वाणः सहली मनुजलीलया पितरावुपासीनो मथुरामध्यासीत् । अपि शीलितकीनाशकारागारान् षट् किशोरानालोकयामास मातरमसीममहिमराशिः । अभ्युपासीनसन्दीपितनिखिलविद्याविपणिरधिगतनिरवद्याशेषविद्याविद्योतमानमानसो दक्षिणीकृत्य दाक्षिणाशाधिपतिमुखपातितापत्यमत्यार्थिने गु(१)रवे विवेशावासमचिरादेव देवकीवसुदेवयोरीशः ।

अथ कतिपयदिवसेषु जायमानेषु तनयावैधव्याभव्यसम्भाव्यमानापरिमाणमन्युना विरचितनिखिलवसुन्धराधीशसन्धिनिर्बन्धेन महामदान्धेन मदकलगन्धसिन्धुरसन्धावमानसैन्धवारन्ध्रधारोद्धतधूलीकृतान्धकारैरन्धीकृतलोकबन्धुगन्धर्वेण कृतयादवकुलकदनानुसन्धानेनाखर्वगर्वोद्धुरस्कन्धेन जरा(२)सन्धेन धावं धावं सप्तदशकृत्वो वन्ध्योद्यमीभूतेनोत्थाप्यमानं यवनवसुन्धराधुरन्धरं मान्धातृकुलसिन्धुकुमुद्वतीबन्धुमुचुकुन्दक्रोधसध्मातनयनहुताशनेन्धनीकृत्य श्रीबन्धुः सिन्धुसविध एव द्वारकानामपुरीमुरीचक्रे चिरं चक्री ।

---

(१) गुरुपुत्रानयनकथा—भा० १० स्कं० ४५ अध्याये ।

(२) जरासन्धकालयवनमुचुकुन्दकथा भा० १० स्कं० ५०-५२ अध्यायेषु ।

अथ विघटितभूमीसुतप्रभृतिभूमीपतिभूमानिःसीमभूमीभारसम्भारो वैकुण्ठपुरमारोहति स्म कण्ठीरवं कुण्ठीकृत्य निहत्य करटीन्द्रमृगेन्द्रमूर्धानं भगवानकुण्ठमहिमा स वैकुण्ठः । पुनरपि निखिलमहाचक्रचक्रवर्त्तिचूडामणिनौदार्यधैर्यमर्यादावितरणमुख्यलक्ष्यगुणधोरणीरत्नखानिना अपि सकलवसुन्धराधुरन्धराकारदोर्विशेषशेषफणिना प्रतिबलमदकलसंघसंघातिसिंहेन वीरसिंहेनोपसादितप्रासादवरमासराद स प्रसादमनाः स्फुटमवसादयन्नयनवतोऽविद्या दयादःपतिर्मतिवेषपेशलो नाम केशवः कुतुकी ।

तद्वैकुण्ठमथाप तापदमनं वैकुण्ठमुत्कण्ठितो
द्रष्टुं कण्ठगृहीतवल्लकिभवेनाकुण्ठकण्ठीरवः ।
विद्याभिः स विशारदोऽनवरतं जिह्वानटच्छारदो
नामोद्गारविसारिकुन्दविशदज्योतीरदो (१)नारदः ॥ ४ ॥

शुचेव श्यामाङ्गी परिगलितसङ्गीतरभसा
क्वचिद्भृङ्गी नैकः स्वनति बत पैकः क्वचिदपि ।
बहिर्द्वारोपान्ते हरिविरहतान्ते च तुलित-
क्षमामज्जयूपे जयविजयरूपे निपतितः ॥ ५ ॥

कुम्भीकृत्वैकमङ्घ्रिं हृदि धरणिलुठत्पक्षतिद्वन्द्वकोटि-
र्विष्टभ्य क्षोणिपृष्ठं विमतकृतिपदान्येन कष्टव्रतीव ।
ग्रीवामावर्त्य भर्तुश्चरणकिणघने चारु निक्षिप्य पक्ष-
प्रान्ते चञ्चूपुटान्तं लिखित इव लसत्यूढतन्द्रः खगेन्द्रः॥६॥

निद्रातीव निवृत्तनिःस्वनमनालीढक्रियं मुद्रित-

---

( २ ) नारदस्तुतिः भा० १० स्कं० ६९ अध्याये ।

द्वारच्छद्मसुखोरुपद्ममभितः सद्मानि पद्मापतेः ।
देवर्षिः समुदीक्ष्य कोशकुहरेष्वस्त्राणि शस्त्राणि च
द्रागारूढविगाढविस्मयभरो भेजे स्वयम्भूपुरम् ॥ ७ ॥
दृष्ट्वा विस्मयवन्तमन्तिकमुपायान्तं विदूराद्विधिः
सद्योऽचिन्तयदन्तरन्तमगमच्चिन्तादुरन्ताम्बुधेः ।
वत्सागच्छ गिरानयाच्छहृदयः सम्भाव्य संभावित-
प्रादक्षिण्यपटुप्रणामकमथालिङ्गत्तमङ्गोद्भवम् ॥ ८ ॥

अथ कमलजनिरुदस्यैकदोष्ठाधरपुटकपटबन्धं वाणीचतुरायतनीमिव चतुराननीं विकाशमुपनीय स्नेहादरकमनीयमभाणीत्सभानीतिविद्वान् भविष्यद्भूतवर्त्तमानार्थविदामग्रणीः स मुनीन्द्रम् ।

विकाररहितस्यापि वारिधेरिव वाडवः ।
अन्तरूष्मा तवाकस्मान्मया समनुभूयते ॥ ९ ॥
गाम्भीर्यं तच्च धैर्यं तदपि च शुचिता साप्यसत्त्वावसादा
मर्यादा सैव सम्यक् समुदयति स हि श्रीसमुल्लासराशिः ।
अद्यान्तःशल्यशैलं भुवनमनुभवत्युच्छलद्धेतुवत्स-
स्वाच्छाम्भोधेरिवाच्छान्तररुचिररुचेः किं प्रचेतोगृहस्य ॥ १० ॥
देहदीधितिविधूतशारदः शारदामृतमयूखपारदः ।
अत्यसीमभवभीमदारदः कञ्जसम्भवमुवाच नारदः ॥ ११ ॥
दृष्टं धाम हरेर्नाम विहरेदेको विवेकोत्तम-
श्चित्रोल्लेखविशेषमैत्र्यघटकास्ते द्वारि दौवारिकाः ।
मूढस्येव मतिः प्रकाशविरतिर्नोद्यानभूर्द्योतते

कुण्ठश्रीव तनोति कस्य न मनो वैकुण्ठमुत्कण्ठितम् ॥१२॥
रोचते पुरतस्तेन पुनरुक्तमिदं वचः ।
चराचरमदः सर्वं कुर्वतः किमगोचरम् ॥ १३ ॥

अथ हृदयवरवर्गिणीप्रसूतसुतभणितमाकर्ण्य वर्णयामास सहस्रपर्णजन्मा संमार्जनाय शङ्कापङ्कानामलंकारितभूयोविस्मयमुपदर्शितभक्तसौभगाहङ्कारम् । अहो जातोऽस्ति त्रिभुवनचमत्कारकारात्कोऽपि रमणीयातिशयो नाम वस्तुविस्तारोऽवधीयतां भूम्ना । अस्ति किल समस्तप्राशस्त्यैकभूरभूतपूर्वोऽपूर्वगुणपूर्वाणांनिधिरिव निखिलरससारातिशयोज्जिहानमूर्त्तिरनात्तभीतभूतसार्थोऽपार्थोदयीकृतपार्थो नाम पार्थिवानामग्रणीर्देवसङ्घोपगीयमानगरिमा वीरसिंहोऽवनीपालः ।

महिम्ना यो भूम्ना चतुरुदधिनाम्नामरचय-
त्तिरोभावं धाम्ना खरकिरणसाम्नामनुभवः ।
सदासिञ्चत्प्रेम्णा द्विजमयितहेम्ना कथमसौ
वृतः श्रेयःसीम्ना भवतु मम धाम्नामविषयः ॥ १४ ॥

अतिशयतेजस्विनि यस्मिन्ननुशासति वसुमतीमण्डलमाखण्डल इव दिवमासीदाशीविष एव द्विजिह्वता नाम, दोषाकर एव दोषाकरता कमलावलोके वैधुर्यं कलङ्कवत्ता क्रमवैकल्यं च, अपि गुणगणानुबन्धो धीरधुरन्धराणामेव, अनवरतमदान्धता च गन्धसिन्धुराणामेव, सैन्धवानामेव चाञ्चल्यम्, कर्कन्धुप्रभृतिमहीरुहाणामेव कण्टकासङ्गः, अपि च मीनमेषकुलीराशिभोजित्वं ग्रहाणामेव, पञ्जरबन्धः कीराणामेव, नीचानुगामित्वं

नीराणामेव, मित्रभेदस्तु तत्त्वज्ञानत्यक्तकलेवराणामेव, द्विजराजपराङ्मुखत्वं पङ्कजानामेव, पङ्कयोगस्तु वर्षासु वसुधाया एव, पङ्कजन्यत्वं तु पङ्केरुहाणामेव, सर्वभोजित्वं तु हुतभुज एव, वर्णविपर्ययस्तु परिणतौ फलानामेव, अग्निपरीक्षा सुवर्णानामेव, तुलारोहश्च दानसमय एव वदान्यानाम्,

यश्च समुद्र इव सकलवाहिनीनामाश्रयः, कमलाभूमकराभिरामश्च, आकाश इव परमवैभवीकवीनपरभागो नक्षत्राणां महोदयप्रणयी च, वीतिहोत्र इव कृष्णवर्त्मा मखप्रकाशी च, प्रभातसमय इव समुदितमित्रमण्डलः सन्ध्यानुरागी च, मध्यान्हसमय इवाभिजित्तया जगत्प्रार्थितः, दिवसावसानसमय इव दृष्टमित्रास्तिमदशो दृष्टद्विजराजोदयश्च, त्रियामासमय इव कुमुदवनप्रसादरुचिराशः, और्वानल इव रत्नाकरोपभोगी, भोगीश्वर इव पातालमधिवसन्नेव निखिलमहीमण्डलोद्धर्त्ता, भर्त्ता भार्याया इव निखिलभुवः करग्राही, ग्राहीव कुम्भीरी(१), गम्भीरीभूतभूयिष्ठभुवनप्रतिष्ठोद्भूतसुखभूतिभूतितिरोभूतधनाधीशो, जम्भारातिपुरोहित इव निखिलजनानामपि दुरासदोऽतिदुर्दान्तानाम्, दान्तानां पुनरभिलषितफलैकभूः कल्पभूरुह इव, भूरुह इव पल्लवच्छायाच्छिन्नसमाश्रितजननिखिलतनुतापः, तनुतापन्नविपन्नरिपुसैन्यतयानन्यसाधारणो रणोपराचितवरवीरवारणो वारणोपचारचारिमचमत्कारघनतया तुलितघनसमयो, मयोपाचितविग्रहोपहतिरसौघपरिपूरितमानसो मानसोपमानमापन्नो राज-

(१) कुम्भिनं हस्तिनमीरयतीति कुम्भीरो नक्रो गजप्रेरकश्च ।

हंसवंशावतंसतया जयति ।

सम्भूय+++विहाय रमणीमेको जगाहे वनि-
मित्यालोऽकि नलो न लोकमहितोऽप्येतस्य साम्यास्पदम् ।
आत्मश्लाघ्यसुतादिक्रयादिविकृतिप्रारब्धसिद्धिक्षमा
दानं विप्रभियाऽचरत्किमु ++हरिस्तुलामश्नाते ॥ १५ ॥

कानीनश्चेन्न कर्णः क्वचिदपि स भवेत्पाण्डवाश्चेन्न कुण्डाः
कुण्डाशीभूतभीमा विपदि च दधतो रूपभेदं भवेयुः ।
भार्यावैधुर्यपर्याकुलतरमतयोऽप्युद्धृता भृत्यभावा-
न्नार्य्या कार्य्यास्तदार्यैः कथमपि तुलिता वीरसिंहैर्नृसिंहैः ॥१६॥

भीमो येन हतः स तेन तुलितः केनास्तु चेदित्यमी
ते ते भीमहताः सुदूररहिता दुर्योधनाद्याः पुनः ।
गाण्डीवी न समोऽस्य येन विपदि क्लीवत्वमङ्गीकृतं
सङ्गीतं भुवि वीरसिंहनृपतेर्नैस्तुल्यमङ्गीकृतः ॥ १७ ॥

कीर्तिकोशललिताजुनसंघो वीरसिंहवसुधापतिसिंहः ।
अस्तु तत्समुपमातुमुपात्तः केन सोऽर्जुनहतो भगदत्तः ॥१८॥

सर्वस्वं वनिताघहारिरिपुणा यस्य क्षणात्खेलया
भूभर्त्तुः पुनरस्य को नु महिमा + + + + किं प्रशः ।
माहात्म्यैकपदं नदृष्टविपदं त्यागस्फुरत्सम्पदं
सत्कीर्त्यास्पदवीरसिंहनृपतिं तेनोपमास्यान्ति के ॥ १९ ॥

दानाम्भोनिचयाभिषेचनचयाविर्भूतशीता(१)यशो-
वासोभिः परितोऽवगुण्ठितवपुर्भूत्वैव लोकत्रयी ।

---

(१) "शीता नभःसरित्" इति तालव्यादौ धरणिः ।

प्रत्यर्थिक्षितिपालजालगहनग्रामोग्रजाग्रद्गुरु—
दग्रोत्तापबलत्प्रतापदहनं यस्यानिशं सेवते ॥ २० ॥
गोत्वालम्बेन गावो दधति शुभचयं चण्डगोः कृष्णवर्त्मा
तत्त्वादेवासपत्नो विलयमुपचितो ज्वालया जाज्वलीति ।
विश्वासह्योग्रतापी ज्वलति सति भृशं वीरसिंहप्रतापे
किन्नाप्स्यद्धैममण्डं द्रवपदमचिरान्नाहितं चेन्मयाप्सु ॥२१॥
सूर्याचन्द्रमसोर्द्वयोरपि दृशोराशङ्क्य शङ्काभरं
शङ्के शङ्कर एव वीक्षितमनास्तस्य प्रतापोच्चयम् ।
भालोद्भासि चकार चक्षुरपरं तं सोढुमर्द्धे दधौ
प्रालेयाचलनन्दिनीसुरधुनीं शीतद्युतिं मूर्धनि ॥ २२ ॥
क्षीरोदक्षुद्रघण्टीकटिघटितपटीप्रान्तदेशस्तु शेषः
शुभ्रावभ्राङ्कुकेतू हिमरजतगिरी कुण्डले स्रग्घुगङ्गा ।
तारालीकण्ठमाला विधुरपि तरलो यद्यशः (२)शम्बकेन
क्षिप्त्वैतावन्ति नृत्यस्थलविरहरुषोज्झ्यते हैममण्डम् ॥२३॥
भिन्दन् कुम्भीन्द्रमैन्द्रं दिशि विदिशि समुत्क्षिप्तमुक्ताकलाप-
श्चञ्चद्द्राचालवीचीकरकरटिधियाघ्रातपाथोधिपाथाः ।
रंहोभिर्लङ्घमानः करिण इति गिरीन्नामिताहीन्द्रपुच्छं
ब्रह्माण्डोपर्युदञ्चन्परिमृशति यशःकेशरीदं करीति ॥२४॥
चाञ्चल्यानां प्रपञ्चं मनसि विगणयन्प्राचमश्वान्विवेकं
यस्मै कस्मै प्रयच्छन्निदधदिव रुषा तस्य दोषस्य दण्डम् ।
संघानां वीरसिंहस्मृतिशरणवतोऽप्यत्र निद्रादरिद्रां

(२) शम्ब एव शम्बको वज्रः ।

लक्ष्मीं प्रक्षीणलौल्यामकृत वसतिषु त्यागदण्डा हि नार्यः।२५।
स्वान्तस्थध्वस्तकंसो नरपतितिलकः श्रीबुदेलावतंसः
संसारोद्यत्प्रशंसो निरवधि रचयन्दान + + करं सः।
मोघीचक्रे॰मयाविष्कृतमपि विदुषां दैन्यलेखप्रपञ्चं
तद्वीर्चा यन्नपेषां स्फुटमलिकतटे प्रोञ्च्छति प्रोच्छलन्ती।२६॥
प्राणेभ्योऽपि वरं वसु स्फुटमिति प्रख्यापितं कौरवैः
प्राणा एव यदुज्झिता न तु कुरुक्षेत्रे वसूनां लवः।
इत्थं दत्तमनेन तत्र वसु तद्विश्वं समातन्वता–
प्यायासैर्यदियत्तया न हि परिच्छेत्तुं मया शक्यते ॥२७॥
उग्रोदग्रबृहत्प्रतापहुतभुग्ज्वालोज्ज्वलत्प्रोज्ज्वल—
द्राङ्गेयप्रतिपत्तिरुत्तमधराधीशैर्व्रतं स्वीकृतः।
तेजःपुञ्जमयः प्रदानसदयः श्रीवीरसिंहाह्वयः
पुण्यात्मा तपनीयकूटतुलनामेवार्हति क्ष्मापतिः ॥२८॥
नीचस्थेन तुलाङ्कितेन रविणा तं तूपमातुं त्रपे
राज्ञोच्चेन गवि स्थितेन तुलितं + नाम कुर्वीत कः।
मीनग्राहिणि का तुला भृगुसुते का वा सुराणां गुरौ
तुङ्गत्वेऽपि कुलीरभोजिनि ततः को वीरसिंहोपमः ॥२९॥
दधीचेः प्राचीनात्कपटबटुना द्यूतपटुना
प्रतार्यास्थि प्राप्तं वितरणयशो नेति च महत्।
विमूढो मायाभिर्व्यतरदवनीं चेद्बलिरसौ
बुदेलाचन्द्रं कस्तुलयतु सहानेन सुकृती ॥ ३० ॥
स प्राचीनो दधीचिः शिबिरपि सुसमीचीनतो ताद्विपक्षा–

वस्यास्तां वीरसिंहक्षितिपतितुलितौ स्तौमि तौ द्वौ तथापि ।
अस्थित्वक्प्राणदानाद्द्विजकुलवदनेऽप्याप नो दानकीर्तिं
प्रत्यर्थी वीरसिंहक्षितिपकुलमणेः प्रापतुस्तौ तथैव ॥३१॥
तुलयिष्यति यत्कदाचिदेनं स न भूतो न च वा भविष्यतीति ।
वसुधापतिसिंहवीरसिंहः स्वयमेव स्वतुलां व्यधत भूयः॥३२॥
वीतांहोनृपवीरसिंहसुयशःशुभ्रारविन्दाङ्कुरो
भित्वा पङ्कमशङ्कमेव जगतां दानाम्बुसम्भावितः ।
कुर्वन्ब्रह्मकटाहभेदनमथो तन्मूर्धपाथोन्तरे
सब्राह्मण्डमखण्डपाण्डिमसरोजन्मेव शर्मादद ॥ ३३ ॥
अस्यालोहिताबिन्दुसुन्दरतया खद्योतविद्योतिता-
मुद्दामद्विपवाहिनीं न कवयः काहुः कुहूयामिनीम् ।
राजानं प्रतिपक्षमक्षयतमःश्यामाखिलापत्क्षयं
सानैषीद्द्विरदीप्रदीपितनभःप्रोद्दण्डदण्डद्वयी ॥ ३४ ॥
आत्मानं हेमकूटैस्तुलयति कुतुकात्कोटिधा वीरसिंहे
रङ्गी सन्हेमशृङ्गी समजनि तरलः स्वेन भूयात्तुलेति ॥
भूभृत्त्वात्तुल्यभारोऽप्ययमवनिभुजा प्रोज्झितो गोत्रभेत्तुः
सङ्गीत्यङ्गीकृतासत्तरमतिकतया व्रीडितोऽभूत्ततोऽसौ ॥३५॥
अहमुच्चैरहमुच्चैरिदमहमिकयैव वीरसिंहेषु ।
वव्रधाते विजिगीषू सममलमले भारतीकमले ॥ ३६ ॥
सप्ताधो भुवनानि सप्त च समुल्लङ्घ्योर्ध्वमुल्लङ्घते
ब्रह्माण्डं बहु वीरसिंहनृपतेः कीर्तिप्रतापद्वयी ।
पर्यायेण पयोधिमज्जनतपः कृत्वेव कर्तुं मुहु-

स्तत्क्रमैव विभावरीशमिहिरौ प्रातस्तमाप्तौ दिवः ॥ ३७ ॥

और्वो वारिधिवारिवारिजकुलाधीशोऽपि साधीभव-
न्व्योम्नि भ्राम्यति शून्य एव हुतभुग्भेजेऽरणेरन्तरम् ।
उग्रे जाग्रति वीरसिंहनृपतिप्रोद्यत्प्रतापे भुज-
स्तम्भो जम्भरिपोरसेवि विगलद्दम्भेन दम्भोलिना ॥३८॥

दिक्पालानेककालं कविकुलगुरवः स्तोतुकामं निकामं
ध्यायन्तोऽनन्तयासं स्मृतिपटुकरणा वीरसिंहं स्तुवन्ति ॥
भूभृद्भिः कृष्णवर्त्मा स दिनजनियमः कौ न पीनः प्रचेता
वातख्यातिर्यदाद्यैर्निरवधि धनदो गीयतेऽसौ गिरीशः॥३९॥

निद्रा नारद शारदीयशशिनि स्तम्भोऽपि दुग्धाम्बुधौ
प्रस्वेदप्रचयं च मुञ्चति हिमव्याजेन हैमो गिरिः ।
नापूर्वं जडिमाचलस्य यदुमाबन्धोरपि स्थाणुता
बुन्देलाकुलचन्द्रसुन्दरयशोवृन्दे दिशो विन्दति ॥ ४० ॥

कवीनां पन्थानः कति कति नवीनाः प्रचलिता
न बुन्देलाचन्द्रे दिवमिव महेन्द्रेऽवति भुवम् ।
पुरैतैः पूर्वेषां गुणशरणिसीमानुसरणा-
दसीमाधिग्रस्ता गतगमनदुःस्थाः समभवन् ॥ ४१ ॥

इदमवधेहि देहि देवर्षे हर्षेण कर्णौ बहुमतकर्णौ यद्वर्णयन्ति वर्णनामधिपतयो नादृतसुवर्णाद्रयोऽनवधृतसवर्णामृनवोऽपर्णानुभाववशीभूतवर्णतया सुपर्णासनगुणगणानुवर्णिनोऽपि निरवधिनिरवद्यगद्यपद्यप्रद्योतमानविद्याविद्रावितगीर्वाणगुरुगर्वा विद्वांसः । किमपरमनुभूय वीरसिंहं भूपतिसिंहं नलनहुषययाति-

भरतभगीरथमान्धातृमुचुकुन्दहरिश्चन्द्रदुःष्यन्तप्रभृत्यनन्तानन्ता-
धिनाथसंघेषु कमपि नाद्रियन्ते वन्दारवो वृन्दारकवृन्दानन्दिम-
न्दारमहीरुहानुविन्दनादितरमहीरुहवृन्देष्विव मैलिन्दाः ॥

भेरीभाङ्कारभीमध्वनिचयबधिरेणार्वकुम्भीन्द्रझम्पान्-
न्यञ्चत्सम्पातकम्पावनिभरविधुरेणाहिराजेन राजन् ।
कस्मादीदृग्बभूवेत्यवकलनकृते प्रेरितादभ्रदर्वी
स्वर्वीथीसीम्नि सोच्चैर्ध्वजपटकपटाद्वीजते वाहिनी ते ।४२।

सर्वानिर्वचनीयदिव्यकृपयागुर्वीयमुर्वी यतो
विश्वग्रासिबलप्रकाशिनि महीजाने प्रयाणे तव ।
उत्तुङ्गध्वजरिङ्गदम्बरमिषादुद्वेलदोर्वल्लरी
दूराच्छंसति वंशभूषण दिशो यातेति युष्मद्द्विषः ॥ ४३ ॥

किं भेरीभाङ्क्रियाभिस्तुलितपटुहरिद्भूरिभिस्त्यां जगत्यां
रंहोभिर्वीरसिंह त्वदहितनृपतेः संहतिः स्यादद्दश्या ।
त्वद्वाहव्यूहवीहाविकटखरपुरोद्धूतधारित्र्यधूली-
वीरा धीरान्धकाराः कवलितककुभो नान्तराया यदि स्युः ४४॥

भूमीनो नृपवन्द्यमन्दरवहारम्भः स भूदारतो
धत्ते सिंहवपुर्विमोहितबलिस्त्रैलोक्यजिद्विक्रमः ।
नक्षत्रक्षयकृद्यतोऽतनुत वैदेहीश्वरो नाबलः
शैलोर्वीयवनान्तमूर्च्छितरिपुर्बुद्धो न कल्की भवान् ॥४५॥

नीरन्ध्रा निरधोगतिः क्षितिरिभैर्दैकूसैन्धवैः संधृता
रंहोभिर्नृपवीरसिंहसमरप्रस्थानलीलाविधौ ।
ऊर्ध्वं गन्तुमतः परं तव रिपोः पन्थानमर्कान्तरं

रुन्धन्ति द्रुतमेव भीरुधरणीमूर्द्धोद्धुता धूळयः ॥ ४६ ॥
प्रत्येकं लक्ष्यभेदाचरणकुशलिनः पत्रिणस्ते सपक्षाः
नापूर्वं कुर्वतेऽमी यदिह न रुधिरं ग्रामसुग्राः समग्राः ।
++++++++++++++++++++
++++++++++++++++++++++ ॥ ४७ ॥
त्वद्वाहव्यूहवेगस्मृतिविधुरतया प्रापदुच्चैःश्रवस्ता-
मर्वाग्गीर्वाणभर्त्तुः स्फुटमनिलगणो रूपहीनो बभूव ।
आस्ये न्यस्येयमग्निं प्रविशति वडवा वारिधेरन्तरालं
चेतोऽणूभूय भूतान्तरमभजदहो वीरसिंहातिरंहः ॥ ४८ ॥
काले धैर्यमितोऽपि दुर्जयगुणोपेतोऽपि वातोपरि
व्याख्यातोऽग्रजवोऽपि काम्यति शरः साम्यं भवद्वाजिना ।
लक्ष्मं धावति तावकीनविशिखस्तुङ्गस्तरङ्गस्तव
त्वङ्गत्तुङ्गतरङ्गतो नरपते गच्छत्यनन्तं यशः ॥ ४९ ॥
गीर्वाणेशगभीरगर्वगरिमाखर्वस्तथापि भ्रमा
नन्वेते गतिचातुरीचयधुरीणाश्चेत्सतां चेतसि ।
पञ्चाशत्पवनाः स नाम तुरगः कोऽप्येक उच्चैःश्रवाः
कत्युच्चैःश्रवसो त्रिषोढयवयुक् +गन्धवाहास्तव ॥ ५० ॥
अम्भोजां भायमानक्षितिसततचलच्छ्रोत्रवाता विवृत्य
प्रोड्डीनोत्क्षिप्तदेवद्विरदपतिगणो घूर्णमाने गजानाम् ।
भूयोऽमी भूतपक्षा गिरय इति रुषोत्पातदम्भोलिरिन्द्रो
विव्रीडे वीरसिंहध्वजपटघटितं वीक्ष्य नामाक्षरं ते ॥ ५१ ॥
गर्वाग्निर्वापयन्ति द्रुतमिभनिवहा द्विट्प्रतापप्रदीपं

हे वंशोत्तंस ते द्विड्भटधरणिरुहां मूलमुन्मूलयन्तः ।
द्विट्पौरप्रेयसीनां नयनजलमयाम्भोधिगम्भीरभङ्गा-
नुत्तुङ्गानुत्क्षिपन्तः पटुनटिततटश्रोत्रझञ्झानिलेन ॥५२॥

मुक्ताहाटकहारिहीरकघटाघोरच्छटोद्घाटित-
भ्राम्यद्भीमभटाङ्घ्रिनाटितधराप्रोद्धूतधूलीतमः ।
वीक्ष्यन्ते विबुधाः सुधानिधिरधादुद्रेकमम्भोनिधा-
वन्योऽसाविति वाहिनीसमुदये छत्रं धरित्रीपतेः ॥ ५३ ॥

सर्वांहःसंघसंहारणनिपुणयशःसंहतौ वीरसिंहे
किं हेमोर्वीधरेण स्फुरतु फलमहो किन्तु कल्पद्रुमेण ।
वाचं च प्रेयसीं च व्यधुरधिकमलङ्कारझङ्कारभाजं
राजन्तो नारदार्थद्वयमपि सुलभीकुर्वतेऽमी कवीन्द्राः॥५४॥

उत्तुङ्गैः सौधसंघैः स्फटिकसुविशदैर्द्योतते द्यौरिवोद्य-
त्तारेन्दुर्भूपतीन्द्रोरभिमतफलभूरौडछा राजधानी ।
पद्मायाः सद्म पद्मान्तिकगतविशदद्वेत्रवत्याः प्रवाहं
तत्प्रान्तप्राप्तनाहं कलयति तपसां यः परीणाहवाही॥ ५५ ॥

प्राहूताः पौरहूताः निखिलदिविषदो हूयते यायजूकैः
काली चण्डांशुमाली मुरभिदपि हली नाकपाली कपाली ।
तां के जानन्ति नाके विहितवसतयो देवतानां समूहा
यच्छोभा दृष्टिलोभात्समुदयति रमा चालयं विस्मरन्ति॥५६॥

ध्यानावेषान्निमेषाचरणविरहिणो निर्ज्झरा योगवत्त्वा-
त्तेजस्वन्तोऽनघत्त्वादमृतरसजुषो लब्धलेखप्रतिष्ठाः ।
यच्छन्तो भक्तिभाजामभिमतमखिलं दृष्टभूदेवसेवा

देवास्ते भूमिदेवाः क्षितिपकुलमणेरोडछायां बभूवुः ॥५७॥

पश्यन्तो नृपतिं निमेषरहितास्तद्राक्सुवाप्याश्रिताः
कुर्वन्तोऽविरतं च काञ्चनगिरिश्रेयोगरीयोऽरुचिम् ।
साधीयोगुरुगौरवाः सुमनसः सन्तानकोल्लासिताः
सेवन्ते परमोडछापुरममी के वा न देवा इव ॥ ५८ ॥

तां दृष्ट्वा पुरमोडछामसदृशीमूढानुरागा नु के
तं तेजांसि महीभुजामिव ययुर्भूयांसि भूमीभुजाम् ।
तैलङ्गाङ्गकलिङ्गवङ्गमगधेष्वान्ध्रेषु चोलेष्वहो
गौडेषु द्रविडेषु गुर्जरमहाराष्ट्रेषु लाटेष्वपि ॥ ५९ ॥

चतुर्वेदी वेदी क्रतुविततवेदी तटवरो
दरोच्छेदी खेदीकृतरिपुरमेदीकृतवपुः ।
शुचावप्यस्वेदी दुरितभरभेदी शुचिजनुः
कलावप्यक्लेदी कलयति स चेदीक्षणपथम् ॥ ६० ॥

ओडछानगरसागरजन्मा दृश्यते सुकृतिभिर्द्विजराजः ।
दृष्टविष्णुपदभक्तिविशेषः कौमुदीरितजनो वितमस्कः ॥६१॥

साम्नाढ्यैः सभ्रयाढ्या सुकृतिभिरतुलैरुज्ज्वला कान्यकुब्जैः
शाकद्वीपीयसारस्वतकृतसुषमा मालवाबद्धमालाः ।
पाश्चात्यैर्दाक्षिणात्यैर्मधुमथनपदार्थाभिवाञ्छित्तावित्तै-
रुद्यद्विद्याकवित्वैर्द्विजपतिभिरसावोडछा संबभासे ॥ ६२ ॥

भूभृद्रक्षोजविक्षोभितनिखिलमतिर्वेत्रवत्याम्बुधारा
मुक्तासाराच्छहाराभ्युपाचितसुषमा सिन्धुरेन्द्रप्रचारैः ।
संभुक्ता वीरसिंहैर्मनसिजसुखभुरोडछा षोडशाब्दा

पक्ष्माक्षीवेति मोदं ध्वजपटकपटा धूतहस्तानिलेन ॥ ६३ ॥
भूदेवैः क्वापि देवैरिव निखिलजनारब्धसेवैः सदैव
क्षत्रैः कुत्रापि चित्रा स्वकृतिषु निपुणैः क्वापि वैश्यैरुपास्या ।
अक्षुद्रैः क्वापि शूद्रैर्विहितसमुदयागाधविद्यासमुद्रै-
र्धन्यासावोऽद्धा पूरयति मम चतुर्वर्णसृष्टीरभीष्टाः ॥ ६४ ॥
ईतिभ्यो न भयं सुनीतिरवनीभर्त्ता हि हर्त्तापदां
येयं वेत्रवती पवित्रसलिलं सङ्गश्च सद्भिः समम् ।
इत्थं के न हि दक्षिणोदगुदिताः प्राक्प्रत्यगभ्युत्थिताः
पारावारमिवापगाः परमगाहन्तोऽद्धां पूरुषाः ॥ ६५ ॥
विन्ध्यैर्वन्द्योद्यमत्वादुरुकपटहठाद्वीरसूरोऽद्धेति
ख्याता++नि काचिद्गनिरखिलमहाराजरत्नस्य यत्नैः ।
त्रैलोक्याक्रान्तिकामैः स्वगुणधरधराधीश्वराद्वीरसिंहं
कृत्वैवोत्तुङ्गमङ्गीकृतमविधमहाचक्रमेको न लोकः ॥ ६६ ॥
आवासाय वशी वशीकृतजगच्चक्रे पुरीमोऽद्धा-
मासीत्केशवसन्निवासिनृपतेरेतस्य चेतः परम् ।
दत्ते यच्च जुहोति यच्च कुरुते यद्वेद वेदादिकं
तत्सर्वस्य फलं न वेद सुकृती प्रीतिं विना श्रीपतेः ॥६७॥
प्रल्हादध्रुवपाण्डवोद्धवसखीयासीदसीमोदया
निर्वाणं गतवत्सु मत्सरकलौ यातेषु याता कृशा ।
अथ श्रीयुतवीरसिंहनिखिलक्ष्मामण्डलाखण्डला-
द्भक्तिः सैव पुरेव कैटभरिपोस्तारुण्यमालम्बते ॥ ६८ ॥
प्रह्लादेऽङ्कुरिता ध्रुवे द्विदलिता वैयासिकौ व्यायता

लब्धालम्बनमम्बरीषहृदयं तस्मिन्नभूत्पुष्पिता ॥
उत्तुङ्गोदयवीरसिंहधरणीधौरेयचूडामणौ
सैवेयं हरिभक्तिकल्पलतिका किं किं न सूते फलम् ॥६९॥
स्वान्तेऽचिन्तयदेकदा परिषदामग्रे समग्रेश्वरो
दृक्चेतःसुलभेऽपि कैटभरिपौ वाग्गोचरेऽपि स्थितम् ।
दीर्घं कश्चिदुपायमाश्रिततया हर्तुं तमः संचितं
सर्वेषामपि दुर्लभं च सुलभीकर्तुं तमार्द्रान्तरः ॥ ७० ॥
चक्रे श्रीयुतमित्रमिश्रसुकृतिद्वारा दुरारोहणं
श्रीनारायणधाम नाम मथुरालङ्कारमोङ्कारवत् ।
क्षीणक्षीरसमुद्रमुद्रविसमालम्बेऽविलम्बे रता
वैकुण्ठेऽपि त्रिकुण्ठधीरपि निरालम्बो यदालम्बते ॥ ७१ ॥
यच्छ्रेयोऽवर्धत श्रीभुजभजनवशादस्य गोवर्धनाद्रे-
र्यद्दोर्दण्डेन रुद्धः परमसुखमसावन्वभूत्कैटभारेः ।
तेनोच्चीयभूय भूयः सुखयति सुभगो रहसा वीरसिंह-
प्रासादच्छद्मनाद्य त्रिभुवनगरिमा बिभ्रदङ्के तमेषः ॥७२॥
ऊर्ध्वं मूर्धनाभिरुन्धद्गुरुगरिमभृता रोदसीं मध्यगेन
क्ष्माधोभागस्य भूम्ना जयति मधुपुरे मन्दिरं कैटभारेः ।
पूर्वाभावात्मपूर्वं त्रिभुवनमधुना स्थैर्यमाचर्य बिभ्र-
द्ब्रह्मैवान्तःसमाधौ यश इव विशदं वीरसिंहस्य राज्ञः॥७३॥
कृत्वाङ्के स्मेरपङ्केरुहनयनमशङ्केन भूमीफणाग्रे
सप्ताधोलोकभूषा फणिकुलपतिनाबाधि कूर्मास्थितेन ।
दोःस्तम्भे वेश्मदम्भादनुजकुलारिपोर्वीरसिंहस्य शङ्के

न्यस्योर्वीचारमूर्ध्वं पुनरियममुना मीयते सप्तलोकी ॥७४॥

वीरसिंहकृतमिन्दिरापतेः सुन्दराकृति रराज मन्दिरम् ।
केशवं दधदनन्ततुङ्गिमा वीरसिंहनृपतेरिवाशयः ॥ ७५ ॥

वीतांहोवीरसिंहोद्भटघटितगुहामन्दिरं कैटभारे-
राभाति स्तम्भकूटं त्रिभुवनभुवनस्येव मेरोर्विरोधि ।
यत्तुङ्गोत्सङ्गरिङ्गत्तरमतुलकुलं मत्तपारावताना—
माराच्चारालिमालिङ्गति वियति मुहुः खण्डपिण्डभ्रमेण ॥७६॥

विषादव्यापादी भृशमनवसादीकृतहरि—
प्रसादप्रासादो हिमगिरिविवादोपघटकः ।
बुदेलाभूलासाक्षितिरमणचूडामणितया
व्यधत्त व्याधानामपि च परमब्रह्मसुलभम् ॥ ७७ ॥

तदायामं कामं त्रिजगदभिरामं सुमनसां
तदुच्चैर्भावं कः कथयितुमशङ्कः प्रभवतु ।
यदङ्के पर्यङ्केऽजनि शशभृदङ्केन तुलितः
स यो विश्वातङ्कत्रिपदपदरङ्कत्रिभुवनः ॥ ७८ ॥

त्रिकुण्ठं वैकुण्ठं जलधिमपि कुर्वञ्जलधियं
प्रसीदन् प्रासादं भजति भजनीयो दिविषदाम् ।
तदानन्दास्पन्दः स्वयमपि सदानन्दलहरी—
सु वन्दे बुन्देलाकुलजलधिवेलार्ज्जिततपः ॥ ७९ ॥

अनीहा नीहारक्षितिभृति खनीहारिमहसा-
मलासः कैलासः कनकगिरिवासः कणगिरिः ।
कथाशेषः शेषोऽजनि गुणविशेषोदयवशा-

दहो प्रासादानामनवरतदानार्द्रमनसः ॥८०॥
यदायामं कामं निरवधिगतवामं दशदिशा-
मनन्तानन्त्यं यद्यदनवधि चान्तर्व्यरमयम् ।
अतो मे वैदग्धीमनुवदति दिग्धीरनिवहो
न चेदाहग्भूपा सकलमिह भूमावुदयतु ॥ ८१ ॥
कैलासाद्रियशोविमर्दिसुषमा बद्धा हिमाद्रिं प्रति
स्पर्धां मेरुमियन्नमेरुफलवत्संभावयद् भासते ।
लेखांल्लेखगतानिवाग्रविलसल्लेखाज्जगल्लेखय-
न्नुल्लासीकृतकोशिमर्दनमनाः प्रासादचूडामणिः ॥ ८२ ॥
मध्याह्ने मणिदर्पणो दिनमणिः स्यान्मूर्ध्नि रात्रौ पुन-
र्मध्यायां रजनीमणिर्यदुमणिप्रासादचूडामणेः ।
प्राग्जन्मार्जितनिर्भरार्जिततपःसंभारसंभावना-
द्यद्यालोकि स एव लोकमटतालोकि त्रिलोक्यद्भुतम्॥८३॥
स्पृशन्ती ब्रह्माण्डोपरितटमखण्डोदितरुचा-
शु चार्वी चागर्वीकृतनहितदर्वीकरपतिः ।
उदेति प्रासादादुपरि सविवादा ध्वजघटी
पटीयः स्वर्धुन्यास्तुहिनगिरिमूर्द्धन्युदितया ॥ ८४ ॥
दिशामीशाः प्राहुर्नरपतियशोबीजमधिका-
वदातप्रासादं प्रकटितनिनादं दिशि दिशि ।
तदग्रोदग्रोद्यद्ध्वजचलनिसर्गोज्ज्वलघटी-
तटीं दृष्ट्वा तज्जाङ्कुरकलननिर्यातकलहाः ॥ ८५ ॥
आब्रह्माण्डमखण्डपाण्डुरपयोधाराद्य नारायणी

न्यस्योर्वीचारमूर्ध्वं पुनरियममुना मीयते सप्तलोकी ॥७४॥

वीरसिंहकृतमिन्दिरापतेः सुन्दराकृति रराज मन्दिरम् ।
केशवं दधदनन्ततुङ्गिमा वीरसिंहनृपतेरिवाशयः ॥ ७५ ॥

वीतांहोवीरसिंहोद्भटघटितगुहामन्दिरं कैटभारे-
राभाति स्तम्भकूटं त्रिभुवनभुवनस्येव मेरोर्विरोधि ।
यत्तुङ्गोत्सङ्गरिङ्गत्तरमतुलकुलं मत्तपारावताना—
माराप्तारालिमालिङ्गति वियति मुहुः खण्डपिण्डभ्रमेण ॥७६॥

विषादव्यापादी भृशमनवसादीकृतहरि—
प्रसादप्रासादो हिमगिरिविवादोपघटकः ।
बुदेलाभूलासाक्षितिरमणचूडामणितया
व्यधते व्याधानामपि च परमब्रह्मसुलभम् ॥ ७७ ॥

तदायामं कामं त्रिजगदभिरामं सुमनसां
तदुच्चैर्भावं कः कथयितुमशङ्कः प्रभवतु ।
यदङ्के पर्यङ्केऽजनि शशभृदङ्केन तुलितः
स यो विश्वातङ्कत्रिपदपदरङ्कत्रिभुवनः ॥ ७८ ॥

विकुण्ठं वैकुण्ठं जलधिमपि कुर्वञ्जलधियं
प्रसीदन् प्रासादं भजति भजनीयो दिविषदाम् ।
तदानन्दास्पन्दः स्वयमपि सदानन्दलहरी—
सु वन्दे बुन्देलाकुलजलधिवेलार्ज्जिततपः ॥ ७९ ॥

अनीहा नीहारक्षितिभृति खनीहारिमहसा-
मलासः कैलासः कनकगिरिवासः कणगिरि
कथाशेषः शेषोऽजनि गुणविशेषोदयवशा-

दहो प्रासादानामनवरतदानार्द्रमनसः ॥८०॥
यदायामं कामं निरधिगतवामं दशदिशा-
मनन्तानन्त्यं यद्यदनवधि चान्तर्व्यरचयम् ।
अतो मे वैदग्धीमनुवदति दिग्धीरनिवद्धो
न चेदीदृग्भूमा सकलमिह भूमावुदयतु ॥ ८१ ॥
कैलासाद्रियशोविमर्दिसुषमा बद्धा हिमाद्रिं प्रति
स्पर्धां मेरुमियन्नमेरुफलवत्संभावयद् भासते ।
लेखांल्लेखगतानिवाग्रविलसल्लेखाज्जगल्लेखय-
न्नुल्लासीकृतकेशिमर्दनमनाः प्रासादचूडामणिः ॥ ८२ ॥
मध्याह्ने मणिदर्पणो दिनमणिः स्यान्मूर्ध्नि रात्रौ पुन-
र्मध्यायां रजनीमणिर्यदुमणिप्रासादचूडामणेः ।
प्राग्जन्मार्जितनिर्भरार्जिततपःसंभारसंभावना-
द्याालोकि स एव लोकमटतालोकि त्रिलोक्यद्भुतम् ॥८३॥
स्पृशन्ती ब्रह्माण्डोपरितटमखण्डोदितरुचा-
शु चार्वी चागर्वीकृतमहितदर्वीकरपतिः ।
उदेति प्रासादादुपरि सविवादा ध्वजघटी
पटीयः स्वर्धुन्यास्तुहिनगिरिमूर्द्धन्युदितया ॥ ८४॥
दिशामीशाः प्राहुर्नरपतियशोबीजमधिका-
वदातप्रासादं प्रकटितनिनादं दिशि दिशि ।
तदग्रोदग्रोद्यद्ध्वजचलनिसर्गोज्ज्वलघटी-
तटीं दृष्ट्वा तज्जाङ्कुरकलनानिर्यातकलहाः ॥ ८५ ॥
आब्रह्माण्डमखण्डपाण्डुरपयोधाराद्य नारायणी

शङ्के शङ्करशङ्कया सुरधुनीपङ्कौघसंकोचनी ।
आनन्दावहगन्धवाहनिवहैः प्रासादमूर्ध्नि ध्वजा-
दुद्धूता धवला घटीचलतटीकोटीरलोकत्रयी ॥ ८६ ॥
चुम्बत्यम्बरमेतदम्बरमणेर्बिम्बं यदा मण्डली-
मिन्दोर्नन्दकुमारमन्दिरशिरःसंघोत्यमन्दं यदा ।
मन्यन्ते मनुजाः प्रजातकुतुकाः संवीक्ष्य साक्षात्तदा
पद्मं नद्धमृणालमिद्धमुदयत्क्षीरोदनीरोदरात् ॥ ८७ ॥
तुल्याशेषहरिन्निवेशनिविडस्फारस्फुरद्दीधितौ
मध्येऽह्नि द्युमणौ जनौघमनसि स्फूर्तिः स्फुटाऽऽसीदसौ ।
एतद्भूपतिवीरसिंहसुकृती प्रासादमूर्ध्नि न्यधा-
दुद्दण्डध्वजदण्डमण्डितमणिच्छत्रं मुरद्वेषिणः ॥ ८८ ॥
शुद्धप्रासादमूर्ध्वं ध्वजधवलघटीकोटकोटीरभावं
बिभ्राणे शुभ्रभानौ निशि दिशि विदिशि भ्राजिताद्भ्रभानौ ।
बुन्देलाभूपतीन्दोरधिगतजगतीजैत्रलेखाङ्कमङ्के
तङ्केनातापशङ्का जगदुपरि यशश्छत्रमत्रोन्नयन्ति ॥ ८९ ॥
इन्दिरेन्द्रमधिगत्य सुन्दरे वीरसिंहकृततुङ्गमन्दिरे
छत्रयन्नुदयते फणीश्वरः स्वां फणां ध्वजघटी न सा(?)णा९०
प्रासादोद्यत्तुषाराचलमतिरचलन्मण्डलं चण्डभानो-
स्तं दृष्ट्वा द्रष्टुकामः फणिपतिरुदगान्नाम वैकुण्ठधाम ।
वैकुण्ठं संदधानो रजनिमणिरसौ तन्मणिर्मध्यरात्रौ
वातव्याधूतपूतध्वजपटममरा वर्णयन्त्येवमेव ॥ ९१ ॥
यः सौन्दर्यमये मुकुन्दनिलये दत्ते क्षणं वीक्षणं

स्थाणुर्वा पुरुषोऽथवेति वलते तास्मिन्सतां संशयः।
नाश्चर्यं तदपि प्रतीहि यदसावाश्चर्यभूमा मुने
पाषाणप्रतिमाभिषोढजडिमा तास्मिन् रमावल्लभः ॥ ९२ ॥
भूयिष्ठानि पदानि कैटभभिदः प्रेष्ठानि भूमण्डले
तत्रासौ मथुरा नितान्तमधुरा तत्रापि तन्मन्दिरम्।
यत्किं नारद वेदयामि विदितं ते भाति सर्वं पुरो
बुन्देलापतिचेतसीव मुरजितत्रैव चित्रायते ॥ ९३ ॥
इत्याख्याय मुनेः साक्षात्परमाख्यातुमक्षमः।
विस्मयोऽविस्मयोद्रेकाद्विरराम चतुर्मुखः ॥ ९४ ॥

## [ कवेरात्मकथा ]

हंसवित्तमतयाभिमण्डितः प्रादुरास भुवि हंसपण्डितः।
भूरिभूतिपरिभूतभूपतिर्दूरवारकुलभूः स्वभूरिव ॥ ९५ ॥
ख्यातो यस्य पितामहस्तनुमहःप्रांशुत्वहंसोत्तमो
हंसज्ञातृतयानहंसजगदुत्तंसोऽलमंशोज्ज्वलः।
कंसध्वंसनकीर्तिशंसनयशोहंसालसंसारक-
स्तं शौरेः स्फुरदंशमंसलममी शंसन्ति शं संतताः ॥९६॥
द्वितीयरहितः श्रियासु निरवद्यया विद्यया
दयानिधिरयावधिस्त्रिदशलोभिशोभाम्बुधिः।
भवाभरणमुद्भवाद्भवनिभः स तस्याभव-
त्पिताखिलहिताकृतिः परशुराममिश्रः कृती ॥ ९७ ॥
श्रीमहेशमहिषीवतारकः श्रीकृतः प्रमुमुदे महेशदा।

सैव यस्य जननीसुनीतिसूर्जानकीव कुशलासभासभूः॥९८॥

द्वौ ज्यायांसौ प्रशस्तानुगुणगुणगणैर्धीरधारावतंसौ
कंसारातेरिवांशौ धृतिसुमतिदयामासलावुन्नतांसौ ।
एको मानीय+न्गुणिमुकुटमणिः स्पर्द्धमानास्त्रिसूर्यान्
सोदर्याः साधुचर्या हुतभुज इव ते यस्य चासंस्त्रयोऽपि॥९९॥

ज्येष्ठाज्ज्येष्ठो गरिष्ठो बहुलगुणभरैः श्रेष्ठकारैकनिष्ठः
प्रेष्ठः क्ष्मापृष्ठभाजामपि चरितशर्मीभूतभूयो दविष्ठः ।
मुख्यो बीरश्वराख्यो महिमबहालिमक्षोभितक्षीरसिन्धुः
श्रीबन्धुध्यानवन्धीभवदनलमनाः सिन्धुरो यस्य बन्धुः॥१००॥

यस्य ज्येष्ठानुजन्मा जगदुदितयशःफुल्लमल्लीमतल्ली
स्रक्श्रेणिश्चक्रपाणिर्गुणमणिविपणिः प्रीतिमच्चक्रपाणिः ।
मर्यादौदार्यधैर्याद्यवधिरनवधिश्रेष्ठनिःशेषविद्या—
रम्भैर्जम्भारिसंभावितगुरुरिव सोऽदम्भधीरुज्जजृम्भे ।१०१॥

वाचा वाचामधीशो मुनिरपि तपसा तेजसा वीतिहोत्रो
द्रोणस्पर्द्धी समृद्धोत्मवनिवहतया युद्धमध्ये च यस्य ।
निःकृच्छ्रः श्रीसहस्रद्युतिरिव दमयन्द्राक्तामिस्रं तनूस्रैः
श्रीयोगादित्यमिश्रः समुदयमयते भक्तिनिष्ठः कनिष्ठः॥१०२

श्रीगोविन्दकृपानुविन्दफलां श्रीवीरसिंहोज्ज्वलां
प्रालेयाद्रिसुतानुभावकवचाऽकम्पां च चम्पूचमूम् ।
जेतुं कालकालौ बलौकसि कलौ काले करालेऽधुना
साम्नाढ्यः स गुणाढ्य एष विदधे श्रीमित्रमिश्रः कृती॥१०३॥

प्राप्य श्रीमित्रमिश्रोऽयमतमिस्रत्रयोदशीम् ।

अतुलां स तुलां सूरे गते चम्पूमपूरयत् ॥ १०४ ॥

मीनारोहिणि रोहिणीसहचरे कृत्वान्तिके रेवतीं
याते चण्डमरीचिमालिनि तुलां वारे च वाचस्पतेः ।
शाके (१)शाङ्कगजर्तुभूपरिमिते ह्यानन्दकन्दाभिधां
चम्पूं पूरितवान्सितस्मरतिथौ श्रीमित्रमिश्रः कृती ॥१०५॥

इति श्रीमन्मित्रमिश्रकृतावानन्दकन्दचम्पूकाव्ये-
ऽष्टमोऽयमुल्लासः ॥ ८ ॥

सम्पूर्णा चेयं चम्पूः ।

(१)—"शाके साष्टगजर्तुभूपरिमिते" इति पठनीयम् । अर्थानुसन्धानानुरोधात् । अयं विषयो भूमिकायां विवेचितः । १६८८ विक्रमसंवत् ।

## "अथ श्लोकानां वर्णानुक्रमणम्"

इति

* श्लोकानां वर्णानुक्रमणं सम्पूर्णम् *



# (१)शोधकपत्रम् ।

## ( ग्रन्थे )

| अशुद्धं | शुद्धं | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| कणोत्तसं | कर्णोत्तंसं | २ | १२ |
| मधुरिम | मधुरिम | ४ | ८ |
| ओक्षेगा | अक्षिणा | ४ | २२ |
| पुण्डरकि | पुण्डरीक | ६ | २ |
| रन्त्यहो | रन्त्यंहो | ६ | ११ |
| यथावर्त्तत | यथार्वर्त्तत | १६ | २० |
| रोहिनी | रोहिणी | १९ | ५ |
| भाव | भव | १९ | २० |
| चण | चरण | २२ | १ |
| कणधार | कर्णधार | २२ | २ |
| हताः | हता | २३ | १६ |
| शुभवतं | शुभवन्तं | २३ | १९ |
| पीपूष | पीयूष | २५ | ८ |
| सौदामिनी | सौदामनी | २५ | २१ |
| रुपं | रूपं | २७ | ३ |
| माहो | महो | ३० | ८ |
| वंशवंस | वंशवतंस | ३३ | १५ |
| सुनौ | सूनौ | ३४ | ९ |
| पुण्डरकि | पुण्डरीक | ३५ | १२ |
| नभभ्रमम् | नभोभ्रमम् | ३६ | ६ |
| स्वमेव | स्वयमेव | ३८ | २० |
| स्वमेङ्क | स्वमङ्क | ३९ | ८ |
| तणा | तृणा | ४० | २४ |
| निन्द्रां | निद्रां | ४४ | ६ |
| माति | मात | ४४ | १२ |
| उरस्थ | उरःस्थ | ४६ | ४ |
| ज्ञम्भारिः | ज्जम्भारिः | ५० | १० |
| तरुणां | तरूणां | ५१ | ५ |
| स्तोभ्यां | स्ताभ्यां | ५१ | १२ |
| अचराम | अचरम | ५५ | १८ |
| भूमयः इवा | भूमय इवा | ५६ | ६ |
| महिधर | महीधर | ५६ | १० |
| पङ्क | पङ्क | ५७ | ११ |
| गिरि | गिर | ५७ | २१ |

( १ ) अत्र सीसकाक्षरयोजनदोषसमुद्गता आपातमात्रविज्ञेयाश्चाशुद्धयः समुपेक्षिताः ।

| | | | |
|---|---|---|---|
| त्रुट्युन् | त्रुटयन् | ६० | १९ |
| चतुथ | चतुर्थ | ६५ | १ |
| रण्पं | रण्यं | ६५ | १९ |
| झणज्झणि | झणज्झणि | ७१ | ५ |
| स्थलो | स्थली: | ७१ | २१ |
| दृश | दृश | ७२ | १२ |
| दुर्वाया | दुर्वार्या | ७३ | १४ |
| मूर्द्धा | मूर्ध्वा | ७७ | १६ |
| निहान् | निवहान् | ७९ | ६ |
| त्वाद्विधा | त्वादृद्विधा | ७९ | १८ |
| प्रोघ | प्रोद्य | ७९ | २० |
| कोटेनि | कोटर्नि | ८० | १ |
| वत्सा | वत्साः | ८० | १३ |
| रव | रव | ८१ | ३ |
| पलाप्य | पलाय्य | ८१ | ११ |
| चटुट्ठ्मट | चटुलपट्ठ्मट | ८२ | ३ |
| वत्सल, | वत्स | ८२ | ३ |
| संप्रतिविष | संप्रति विष | ८२ | ४ |
| मर्ज्जार | मञ्जीर | ८२ | ११ |
| दूधं | दूध्वं | ८२ | १३ |
| विहारेया | विहारयो | ८२ | १५ |
| कृतात्प्रे | कृतोत्प्रे | ८२ | २० |
| वलियत | वलयित | ८३ | ९ |
| वराद्दशः | वरद्दशः | ८३ | १८ |
| दपर | दमर | ८४ | १२ |
| स्तम्बा | स्तम्भा | ८५ | १७ |
| लब्धा | लब्ध्वा | ८६ | ७ |
| जलार्द्रा | जलार्द्र | ८७ | ८ |
| क्र्णं | कर्णं | ८८ | १४ |
| मुहुनि | मुहुर्नि | ८८ | १५ |
| धारो | धारा | ८८ | १८ |
| राजीरुचं नु | राजी रुचन्नू | ८८ | १८ |
| घाप | घोष | ८९ | १ |
| वसनं | वसनेन | ८९ | ६ |
| पाययन्य: | पाययन्त्य: | ८९ | १९ |
| तनू | तरू | ९० | ७ |
| मर्मोक्षे | मर्मोक्षे(?) | ९२ | १० |
| समुद्भूत | समुद्भूत् | ९७ | १६ |
| मञ्जीरशिञ्जां | मञ्जीरशिञ्जा | १०० | ३ |
| निझेरशिला | निर्झरशिला | १०० | २१ |
| समारुतं | समाहतं | १०१ | ४ |
| प्रवश | प्रवेश | १०१ | २२ |
| तरुन्नाम | तरून्नाम | १०२ | ७ |
| क्षाणमपि | क्षणमपि | १०५ | ९ |
| गन्धर्वानां | गन्धर्वाणां | ११० | ८ |
| ताण्डव | ताण्डवा | ११० | ११ |
| डाम्बर | डम्बर | ११० | ११ |
| धारित्रा | धरित्री | १११ | ५ |

| | | | |
|---|---|---|---|
| रस्महं | रस्म्यहं | ११२ | ४ |
| मात्त | मार्त्त | ११६ | २२ |
| मुर्वीधिरं | मुर्वीधरं | ११९ | १८ |
| निवृति | निर्वृति | १२० | २१ |
| विचित्रै | विचित्रै | १२१ | २[illegible] |
| मगङ्गल | मङ्गल | १२५ | ७ |
| यः द्युति | यद्युति | १२७ | १० |
| दिशा | दिशो | १२८ | २० |
| कीदक | कीदृक् | १३० | ४ |
| गुरोः | गुरो | १३२ | ११ |
| वस्र | वस्त्र | १३३ | २२ |
| लोकध | लोकय | १३६ | २ |
| चिर | चिरं | १३७ | ६ |
| मन्धयग्ञ्जिश | मन्धयञ्जिश | १३७ | १८ |
| स्कन्धा | स्कन्धा | १३८ | २२ |
| नोहारि | मनोहारि | १४५ | १९ |
| नद्धिहित | तद्गणित | १४६ | ५ |
| चित्त | चित | १४८ | ८ |
| घृतालि | घृतालि | १५१ | ३ |
| दस्राभिव | दस्रमिव | १५१ | ४ |
| त्वर्याश्व | त्वयीश्वर | १५१ | १६ |
| निरणापि | निरणायि | १५२ | ७ |
| दहद | ददद | १५५ | ७ |
| गाचराः | गाचरा | १५५ | १० |
| इहमाहक | इदमाहक् | १५५ | ११ |
| वर्णन्यती | वर्णयन्ती | १५५ | १२ |
| हसक | हंसक | १५९ | ५ |
| चातुरि | चातुरी | १६२ | १५ |
| नीर्णीय | निर्णीय | १६३ | १३ |
| मवलेपि | गानलेपि | १६३ | १४ |
| नन्दना | नन्दनाः | १६३ | १७ |
| चकारे | चकार | १६३ | १९ |
| दक्षिणमुहुर्य | दक्षिणमहोय | १६४ | २१ |
| स्पृश्यामि | स्प्रक्ष्यामि | १६४ | २१ |
| रेदुः साहस | रे दुःसाहस | १६५ | ११ |
| भवद्धटी | भवद्धटी | १६७ | २ |
| झणञ्झ | झणज्झ | १६७ | ४ |
| कलतक | कलक्व | १६७ | ५ |
| कज्जु | कञ्ज | १६८ | ६ |
| दृष्टा | दृष्टो | १६८ | १४ |
| युवती | युवति | १७० | ३ |
| क्षयित | क्षपित | १७२ | १७ |
| बुद्ध मया | बुद्धमये | १७३ | १२ |
| यास | मास | १७७ | १० |
| शान्तकुम्भ | शातकुम्भ | १७८ | ८ |
| मुत्क्वटौ | मुत्कटो | १७९ | १९ |
| ज्वरयनरांश्च | ज्वरयन्नरांश्च | १८१ | १३ |
| तंस्मं | तंसं | १८१ | १५ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| श्रौरसो | श्रोरसो | १८२ | १५ | रनात्तर्भि | रनार्तीभु | १९१ | ९ |
| पार्श्वेन | पार्श्वेण | १८२ | १७ | पुरैतेः | पुरैते | १९७ | १६ |
| मजा इव | गजा इव | १८३ | ८ | हैक् | हक् | १९८ | २० |
| विवता | वितता | १८४ | १२ | मालाः | माला | २०१ | १७ |
| नृकेसरि | नृकेसरी | १८५ | ९ | मोद | मोदं | २०२ | १ |
| रचमन्न | रचयन्न | १८५ | ११ | व्यधते | व्यधत्ते | २०४ | ११ |

## ( श्लोकानामनुक्रमणे )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अभूतत्पु | अभूत्पु | २(क) | १८ | वीरसिंहकृति | वीरसिंहकृत | १९(क) | २ |
| कमलकोमल | अमलकोमल | २(क) | २१ | व्रफलतमुपल | व्रतफलमुपल | १९(क) | २६ |
| इति गिरि | इति गिर | ४(क) | ६ | सर्वाहः | सर्वाहः | २०(ख) | ८ |
| बलधौत | कलधौत | ५(ख) | १९ | रम्भा | रम्भा | २१(ख) | ४ |
| ध्यायन्तु | ध्यायन्तु | ११(क) | २२ | हरिणान्तर्गगतं | हरिणान्तर्गतं | २१(ख) | २३ |
| प्रोढ | प्रौढ | १४(क) | २६ | ग्रास | ग्राम | २२(क) | १२ |

## ( उपोद्धाते )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मित्रमित्र | मित्रमिश्र | १ | २ | मया | मयी | १ | १५ |
| स्तुस्ति | स्तुति | १ | १५ | नीलाकण्ठ | नीलकण्ठ | ९ | २ |

No. 18-(Part I)-The Gorakṣa Siddhânta Sangraha.

Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.

Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part. II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.

Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,

Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-2

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśi by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.

Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares. Rs. 1-0

No. 23-Navarātrapradīpa by Nanda Pandit Dharmādhikārī.

Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrīt College, Benares. Rs. 2-0

No. 24-The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.

Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post-Achārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3-12

No. 25-The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs. 1-4.

No. 26-The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1-0

No. 27--The Vidvachcharita Pañchakam By Nārāyana S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs. 2-0

No. 28--The Vrata Kos'a by Jagannātha S'āstri Hosiṅga Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4-0

No. 29-The Vṛitti dīpikā By Mauni S'rī Kṛṣṇa Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bhāradvāja, Professor, Govt. Sanskrit College, Benares. Rs. 1-2

No. 30-.The Padārtha Maṇḍanam By S'rī Venīdatta.
Edited with Introduction etc. by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares. Rs. 0-14

No. 31 ( Part I)-The Tantraratna by Pârtha Sārathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad. Rs. 1-14

No. 32-The Tattvasāra by Rākhaldasa Nyāyaratna.
Edited with Introduction etc. by Harihara S'astri, Benares Hindu University.

No. 33-The Nyaya Kaustubha ( Part I ) by Mahadeva Puntamkar.
Edited with Introduction etc. by Umes'a Miśra, M. A., Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-2

No. 6—(Part I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-8

No 7—( Part II ) Ditto Ditto Rs. 1-4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1–2

No. 10-(Part II)—Do. Do. Rs. 2–12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0–9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0–14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–14

No. 15-(Part I)-The Tripurārahasya. (Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0–14

No. 15-(Part-II)—Do. Do. Rs. 2–4

No. 15-(Part III)—Do. Do. Rs. 2–0

No. 15-(Part IV)—Do. with Introduction, etc. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgā nātha Jha.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda-Prātiśākhya, by Maṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans, by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśākhyas, by Maṅgala Deva S'āstri

(e) Formal Training and the Ancient Indian Thought, by G.I Sinha.

(f) History and Bibliography of Nyāya Vais'eṣika Literature by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Rāmāyaṇa, by Manmatha nātha Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha.

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares), by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhamaha and his Kavyalankara, by Batukanatha S'arma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vais'eṣika Sutras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the Correct meaning of some obscure Vedic words, by Sītāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term Parārdha, by Umes'a Mis'ra.

Vol. VIII. ( In progress )

(a) Indian Philosophy, by Taraknath Sanyal.

(b) An Index to the Rāmāyaṇa, by Manmatha Nath Roy.

(c) Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

To be had of
The Superintendent
Government Press, U. P.,
Allahabad.

No. 34–( Part I ) The Advaita Vidyātilakam by S'rī Samarapuṅgava Dīkṣita. With a Commentary by S'rī Dharmayya Dīkṣita. Edited with Introduction, etc, by Ganapati Lal Jha M. A., Sadholal Research Scholar, Govt. Sanskrit Library, Benares.

No. 35–The Dharma Vijaya Nāṭaka by Bhūdeva S'ukla. Edited with Introduction etc, by Pandit Nārāyaṇa S'āstri Khiste, Asst. Librarian, Govt. Sanskrit Library, Benares.

No. 36–The Ananda Kanda Champu, by Mitra Misra. Edited, with a Foreword by Gopinath Kaviraj, M. A., by Nanda Kishore Sāhityācharya, Research Scholar, Sanskrit College, Benares.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgā-nātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5